Sharada Tilaka

# शारदा

॥श्रीकाशीविश्वनाथपुरीमेमहल्लाभदैइनी दिवाकरछापाखाने पोथीशारदाटीकागूढार्थदीपिकासहित दाऊके
प्रतियासेशुद्धकरकेछपाशिवचरनकेइहाँ वा: महीपनारायनपांडे का: मातादयाल जिसेलेनाहोयउसैचान
नीचौकमेकुंजगलीकेपासशिवचरनकेदुकानपरमिलैगा॥ संवत्१९४० मि·कार्त्तिकसुदी ७ वार रवि ॥

॥श्रीगणेशायनमः॥ भवंभवानींतत्पुत्रंगणेशंविघ्नभंजनं॥नमस्यामितथाभक्त्यासर्वकार्यार्थसिद्धये १ नत्वाविशुद्धविज्ञानंसर्वज्ञंरामभारथी
त्रिविक्रमार्यमुनिनातत्शिष्येणसुधीमता॥२॥शारदातिलकाख्यस्यग्रंथस्यक्रियतेमया ॥टीकाबालप्रबोधायनाम्नागूढार्थदीपिका॥३॥प्रारिप्सि
तस्यग्रंथस्यविघ्नेनपरिसमाप्तिप्रचयगमनाभ्यांशिष्टाचारपरिपालनायचविशिष्टदेवतानमस्कारःकर्तव्यःग्रंथस्यविषयप्रयोजनसंबंधाधिकारि
णश्चप्रदर्शनीयाः प्रवृत्त्यंगत्वेनेत्येवंसगुणनिर्गुणभेदेनदेवतानमस्कारंकुर्वन्तततसर्वंदर्शयितुमाचार्यआह नित्यानंदेत्यादि॥पमर्थः।तन्महःवोयुष्मानव्या
त्पापादितिसंबंधः।किंतत्येनमहसा——चराचरात्मकमिदंजगत्व्याप्तमजस्रंतांचरंजंगमंस्थावरं।तदुभयात्मकं।कथंभूतंजगत्।शब्दार्थरूपंना
मरूपात्मकमित्यर्थः॥कथंभूतंतन्महः।नित्यानंदवपुः।नित्यश्चासावानंदश्चेतिनित्यानंदः।सएववपुःशरीरंयस्यतथाआनंदैकरसस्वभावमित्यर्थःकै

॥श्रीगणेशायनमः॥नित्यानंदवपुर्निरंतरगलत्पंचाशदर्णैःक्रमाद्व्याप्तंयेनचराचरात्मकमिदंशब्दार्थरूपंजगत्।शब्द
ब्रह्मयदूचिरेसुकृतिनश्चैतन्यमंतर्गतंतद्वोव्यादनिशंशशांकसदनंवाचामधीशंमहः॥ १॥

\\ व्याप्तंनिरंतरगलत्पंचाशदर्णैः
अनवरतमभिव्यक्तपंचाशद्वर्णैःतथाचानिरंतरंस्रवद्भिर्वाकथंक्रमात्।तदुक्तंभवति।महसोमूलकारणाजन्यत्वात्पंचाशद्वर्णानांतत्कार्यरूपेजगति
तद्द्वारातद्व्याप्तिःसिद्धेतिपुनःकिंविशिष्टंयदेतदंतर्गतंप्रत्यक्चैतन्यंतदेवसुकृतिनःतपोधनाःशब्दब्रह्मेत्यूचिरेअवोचन् अनिशंसर्वदा।पुनःक
थंभूतं।शशांकश्चंद्रस्तस्यसदनंआलयम्।अधिष्ठानमितियावत्।पुनःकीदृशं।वाचामधीशंवागधिपतिमित्यर्थः।गूढार्थस्तु॥ नित्यानंदवपु
रित्यनेनप्रयोजनंसूचितं।निरंतरगलत्पंचाशद्वर्णैरितिविषयोनिर्दिष्टः॥एवंविधप्रयोजनार्थीअधिकारीत्यर्थसुचितशास्त्रंतत्साध्यमितिसाध्यसा
धनसंबंधलक्षणःसंबंधःसूचितः।इतिप्रथमश्लोकार्थः॥एवंशिवशक्त्यात्मकत्वात्सकलप्रपंचजातस्यसगुणत्वेनशिवरूपमभिधायनिर्गुणरूपमभिधत्ते।

अंतः स्मितेति। अस्यार्थः। वः युष्माकं नवेंदुमौलेरंतःपुरं मंगलं कल्याणं दिशतु प्रयच्छतु करोतु॥ नवश्चासौ विंदुश्च नवेंदुरिति द्वितीयश्चंद्रमाः स मौलौ यस्य
स नवेंदुमौलिः तस्य शिवस्य अंतःपुरं स्त्र्यगारं तेन तत्रत्या भवपत्नी लक्ष्यते॥ कथं आदरात्॥ अनुग्रहात्। कीदृशं अंतःपुरं त्रिलोकविभवस्य हेतुः त्रयाणां लो
कानां विभवो विस्तरः। तस्य कारणं पुनः कथंभूतं इंदीवरोदरसहोदरनेत्रशोभि॥ इंदीवरस्य उदरं मध्यं अभ्यंतरं तस्य सहोदरे अपवादसदृशे नेत्रे ताभ्यां शोभि वि
राजमानं दीप्यमानं॥ यद्वा पुनः कीदृशं इंदुकलावतंसं॥ इंदोः कला सैव अवतंसं शिरोभूषणं यस्य तत्तथा। कर्णभूषणं वा। पुनः कीदृग्विधम्॥ अंतःस्मितोच्छ्व
सितं ईषद्धासेन शोभितं॥ अथवा॥ अंतःस्मितवत् शुभ्रमित्यर्थः। एवंविधा शुभ्रा सा परमेश्वरस्य जगन्निर्माणादौ सहकारिणी शक्तिः युष्माकं कल्याणं सर्वदा

अंतःस्मितोच्छ्वसितमिंदुकलावतंसमिंदीवरोदरसहोदरनेत्रशोभि॥ हेतुस्त्रिलोकविभवस्य नवेंदुमौलेरंतःपुरं दिशतु मंगल
मादराद्वः ॥२॥ संसारसिंधोस्तरणैकहेतून्वंदे गुरून्मूर्ध्नि शिवस्वरूपान्॥ रजांसि येषां पदपंकजानां तीर्थाभिषेकश्रिय
मावहंति ॥३॥ सारं वक्ष्यामि तंत्राणां शारदातिलकं शुभं॥ धर्मार्थकाममोक्षाणां प्राप्तेः प्रथमकारणम् ॥४॥ शब्दार्थसृष्टि
र्मुनिभिश्छंदोभिर्दैवतैः सह॥ विधिश्च पंचमंत्राणां तंत्रेस्मिन्नभिधीयते ॥५॥ ११ प्रयच्छतु इति श्लोकार्थः॥२॥ यस्य देवे परा भ

क्तिर्यथा देवे तथा गुरौ इति न्यायात्॥ देवतानमस्कारानंतरं गुरुनमस्कारं करोति। संसारेति॥ गुरून्मूर्ध्नि वंद्यामहे॥ कथंभूतान् शिवस्वभावान्। दे
वरूपान्। पुनः कीदृशान्। संसार एव सिंधुर्वा सिंधुः। दुस्तरत्वात्॥ तस्य तरणे लंघने एकहेतून्। असाधारणकारणभूतान्। उद्देशद्वारा एषां गुरू
णां पदपंकजानां रजांसि धूलयः तीर्थेषु अभिषेकः तीर्थाभिषेकः तस्य श्रीः तज्जनितं पुण्यतमा वहंति॥ वदंति॥ कुर्वंति प्रयच्छंतीति वा श्लोकार्थः॥३॥
गुरुदेवतानमस्कारानंतरं ग्रंथनामपूर्वकं प्रतिज्ञां कुरुते सारमित्यादिना॥ तंत्राणां मंत्रशास्त्राणां॥ उत्तरार्द्धेन प्रयोजनमाह॥ ग्रंथप्रतिपाद्यं संक्षे
पतो दर्शयति॥४॥ शब्दार्थेति॥ मुनिभिर्ऋषिभिः संक्षेपतः शब्दसृष्टिं वक्तुं सगुणनिर्गुणभेदं परमेश्वरं दर्शयति ॥५॥ ॐ ।

निर्गुणेति॥प्रकृतेरन्यः केवलः। सकलो विद्यासंभिन्नः॥६॥इदानीं सृष्टिमाह॥सच्चिदानंदेति॥प्रलये सूक्ष्मस्वरूपेणाऽध्यस्ताविद्यासहितात्परमेश्वरा च्छक्ति रजायत॥अयमर्थः॥सूक्ष्मरूपेणाऽध्यस्ताविद्या या सैव परशक्तिः तस्याः सूक्ष्मरूपं परिहाय या घनीभूता गुणवैषम्येन स्थूलरूपेणावस्थानं जननं नाम ततो नादः तदनंतरं नादः। तस्यैव सृष्ट्युपयोगिन्यंतशब्दात्मिकावस्था नादिंदुः तस्या एव सत्वादिगुणमध्ये कार्यानुगुणे सत्वे रजसि तमसि वा उत्थानावस्था भवति॥सैव विंदुरित्युच्यते॥७॥परशक्तिरिति एवं विंदुमूलप्रकृतिविकारः॥अत एव शक्तिमयः पुनस्त्रिधा भवति॥त्रैविध्यमेव दर्शयति॥८॥विंदुरिति के नप्रकारेण स्थूलसूक्ष्मपरत्वेनेति॥प्रपंचसारे स विंदुर्भवति त्रिधेत्यादिना॥ननु सर्वप्रपंचस्य शिवशक्तिमयत्वात्कथं शक्तिमयत्वमेवेत्यत आह॥विंदुरिति॥ किं

निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः॥ निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः॥६॥ सच्चिदानंदविभवात्सकलात्परमे श्वरात्॥ आसीच्छक्तिस्ततो नादो नादाद्विंदुसमुद्भवः॥७॥ परशक्तिमयः साक्षात्त्रिधासौ भिद्यते पुनः॥ विंदुर्नादो बीजमि ति तस्य भेदाः समीरिताः॥८॥ विंदुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः॥ समवायः समाख्यातः सर्वागमविशारदैः॥९॥ रौद्री विंदोस्ततो नादाज्ज्येष्ठा बीजादजायत॥ वामा ताभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपाः॥१०॥ ते ज्ञानेच्छाक्रियात्मानो व ह्नींद्वर्कस्वरूपिणः॥ भिद्यमानात्पराद्विंदोरव्यक्तात्मा रवोऽभवत्॥११॥ शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः॥ शब्दब्रह्मेति श ब्दार्थं शब्दमित्यपरे जगुः॥१२॥ तत्र प्रमाणमत आह॥९॥सर्वेति॥तैरेव विंदुनादबीजैर्यथाक्रमं रुद्रब्रह्मविष्णूनां रौद्रीज्येष्ठावामेति तिस्रः शक्त

योजायंतेत्यत आह १० रौद्रीति॥वक्ष्यमाणोपयोगित्वेन एषां रुद्रादीनां स्वरूपमाह॥ज्ञानरूपो रुद्रः॥इच्छारूपो ब्रह्मा॥क्रियारूपो विष्णुः॥सर्वज्ञत्वव्यवहा रेषु जानातीच्छति॥प्रयतते एष क्रमः॥इदानीं शब्दसृष्टिं कथयति भिद्यमानादित्यादिना परात्॥विंदोः उद्भूतलक्षणात्पूर्वोक्तात् शिवशक्तिमयाद्विंदोरित्य र्थः॥ननु निरंतरात्परस्याव्यक्तत्वं नाम शब्दविशेषरूपेणाविभाव्यमानाखंडस्वरूपत्वं तमेव निर्विशेषाखंडशब्दमात्रं शब्दब्रह्मेति श्रुतिविदः संगिरंतइत्य तआह॥११॥शब्दब्रह्मेति॥स्फोटपक्षनिराकरणार्थमाह॥शब्दब्रह्मेति॥शब्दार्थमिति॥किं दूषणमनुचितं॥भूषणाय चेत्या शंक्य इखानयेत्याह॥१२॥

नहितेषामिति॥ अयंभावः। तेषां शब्दो वा शब्दार्थो वा शब्दब्रह्मेतिवादिनां। उभयोः शब्दतदर्थयोर्जडत्वात्॥ अर्थावबोधकत्वायोगात्। स्वमतमाह चैतन्यमिति।
अपं निगूढस्वार्थावबोधान्यथानुपपत्त्या कल्प्यमानोप्यखंडस्फोटोप्यर्थावबोधको न भवति॥ शब्दार्थावपि बोधकौ न भवतः। किंतु स्वरक्रमादिविशिष्टे श्रोत्रग्राह्ये
वर्णात्मकैः शब्दैरनुमीयमानमखंडशब्दतन्मात्रलक्षणार्थे चैतन्यविशिष्टं शब्दब्रह्मेति विद्वांसो विदांचक्रुः। अतश्च स्वरादिविशिष्टशब्दतन्मात्रानुमापका श्रो
त्रग्राह्या एव शब्दचैतन्यसंसृष्टतयार्थावबोधकाः। शरीरे तु शब्दोत्पत्तिप्रकारः संक्षिप्योच्यते। तत्प्राप्य कुंडलीरूपमिति। तत्प्राप्य चैतन्यं प्राप्य। इदानीं स्वा
गमानुसारेण शिवादिपंचोत्पत्तिमाह॥१४॥ अथेति। बिंदुः शिव इत्युक्तत्वात् कालशब्देन शिवशक्तयोः संबंधः स्वीक्रियते॥ कलाशब्देन शक्तिशक्तिमतोरभेदः स्वि

नहितेषां तयोः सिद्धिर्जडत्वादुभयोरपि॥ चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतिः॥१३॥ तत्प्राप्य कुंडलीरूपं प्राणिनां देहमध्यगं
॥ वर्णात्मनाविर्भवति गद्यपद्यादिभेदतः॥१४॥ अथ बिंद्वात्मनः शंभोः कालबंधोः कलात्मनः॥ अजायत जगत्साक्षी सर्व
व्यापी सदाशिवः॥१५॥ सदाशिवोद्भवस्त्वीशस्ततो रुद्रसमुद्भवः। ततो विष्णुस्ततो ब्रह्मा तेषामेवं समुद्भवः॥१६॥ मूलभूतात्त
तोऽव्यक्ताद्विकृतात्परवस्तुनः॥ आसीत्तत्त्वं महत्तत्त्वं गुणान्तःकरणात्मकं॥१७॥ अभूत्तस्मादहंकारस्त्रिविधः सृष्टिभेदतः। वै
कारिकादहंकाराद्देवा वैकारिका दश॥१८॥ दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रकाः॥ तैजसादिंद्रियाण्यासंस्तन्मात्राक्रम
योगतः॥१९॥ भूतादिकादहंकारात्पंचभूतानि जज्ञिरे॥ शब्दात्खं वियत्स्पर्शाद्वायू रूपाद्धुताशनः॥२०॥ (( क्षपाकलात्मन इत्युक्तं

अतः सशक्तिकाच्छिवादेव सदाशिवादीनामुत्पत्तिरिति बोद्धव्यं। इदानीमर्थसृष्टिमाह॥ कलाभूतादिति॥ अस्मादेव शिवादित्यर्थः। गुणान्तःकरणात्मकमिति।
गुणाः सत्वादयः। अंतःकरणं चतुष्टयं। तदात्मकं महत्तत्त्वमासीदित्यर्थः॥ तस्मान्महत्तत्त्वादहंकारो वैकारिकतैजसभूतादिकः भिन्नो जायत इत्यत आह अ
भूत्तस्मादिति॥ कथंभूतादहंकारात्॥ केषामुत्पत्तिरित्यत आह क्रमेण वैकारिकादिना। तन्मात्राक्रमयोगत इति॥ शब्दादितन्मात्राक्रमयोगत इति। एवं पं
चभूतानामेवोत्पत्तिप्रकारमाह॥ शब्दात्खमिति॥ शब्दात् शब्दतन्मात्रादिति। एवमुत्तरत्रापि तेषां भूतानां वर्णनामाह ॥ १९ ॥ २० ॥

स्वच्छंवियदित्यादिनात्वमीषांतेषांविशेषगुणानाह।शब्देत्यादिना॥उत्तरोत्तरतत्कार्योपयोगितयातेषांमंडलानिकथ्यंते॥वृत्तंदिवइत्यादिना॥तेषांमंडलानांव
र्णानाह॥तत्तद्भूतसमेति॥२४॥इदानींतत्तद्भूतोत्पत्तिकलाःक्रमेणप्रदर्श्यंते।धरातइति॥२५॥निवृत्याद्याइति॥२६॥नाडयज्जश्रियाः॥तत्कथनोपयोगमाह

रसादंभःसमाराद्गंधादितितेषांसमुद्भवः॥स्वच्छंवियन्मरुत्कृष्णोरक्तोग्निर्विशदंपयः॥२१॥पीनाभूमिःपंचभूतान्येकैकाधारतोविदुः॥
शब्दस्पर्शरूपरसगंधाभूतगुणाःस्मृताः॥२२॥वृत्तंदिवस्तत्षड्बिंदुलांछितंमातरिश्वनः॥त्रिकोणस्वस्तिकोपेतंवह्नेरर्द्धेंदुसंयुतं
॥२३॥अंभोजमंभसोभूमेश्चतुरस्रंसवज्रकं॥तत्तद्भूतसमाभानिमंडलानिविदुर्बुधाः॥२४॥वर्णैःस्वैरंचितान्याहुःस्वस्वनामा
वृतान्यपि॥धरादिपंचभूतानांनिवृत्याद्याःकलाःस्मृताः॥२५॥निवृत्तिःसप्रतिष्ठास्याद्विद्याशांतिरनंतरं॥शांत्यतीतेतिविज्ञे
यानादेहसमुद्भवाः॥२६॥पंचभूतात्मकंसर्वंचराचरमिदंजगत्॥अचराबहुधाभिन्नागिरिवृक्षादिभेदतः॥२७॥चरास्तुत्रिविधाः
प्रोक्ताःस्वेदांडजजरायुजाः॥स्वेदजाःकृमिकीटाद्याअंडजाःपन्नगादयः॥२८॥जरायुजामनुष्याद्यास्तेषुनृणांनिगद्यते उद्भवःपुं
स्त्रियोर्योगेशुक्राच्छोणितसंयुतात्।विंदुरेकोविशेद्गर्भेउभयात्मात्क्रमादसौ॥रजोधिकाभवेन्नारीभवेद्रेतोधिकःपुमान्॥३०॥पू
र्वकर्मानुरूपेणमोहपाशेनयंत्रितः॥कश्चिदात्मातदातस्मिंजीवभावंप्रपद्यते॥३१॥अथमात्राहृतैरन्नपानाद्यैःपोषितःक्रमा
त्।दिनात्पक्षात्ततोमासाद्वर्द्धतेतत्तदेहवान्॥३२॥दोषैर्दूष्यैःसुखंप्राप्तोव्यक्तिंयातिनिजेंद्रियैः॥वातपित्तकफादोषादूष्याःस्युःस
प्तधातवः॥३३॥त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणितान्विदुः ज्ञानेंद्रियाणिश्रोत्रत्वग्दृग्जिह्वानासिकाविदुः ३४ ज्ञानेन्द्रियार्थाःश
ब्दाद्याःस्मृताःकर्मेन्द्रियाण्यपि।वाक्पाणिपादपाय्वंधसंज्ञान्याहुर्मनीषिणः।वचनादानगतयोविसर्गानंदसंयुताः।कर्मेंद्रियार्थाः
संप्रोक्ताअंतःकरणमात्मनः ३६॥ पंचभूतेति।इदानीमर्थसृष्टिंव्यनक्ति।चराइत्यादि।स्वेदांडजजरायुजाइत्याद्युक्तम्॥तानेवविविच्यद
र्शयति २७ स्वेदजाइत्यादिनाकश्चिदित्यारभ्यअंतःकरणात्मनइत्यंतःस्पष्टार्थः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२॥३३॥३४॥३५॥ ३६

अन्तःकरणचतुष्टयमाह॥ मनइति॥ अष्टौप्रकृतयःप्रदर्श्यंते॥ षोडशविकृतयश्चेति॥ दशेत्यारभ्यअष्टाविंशत्यंतेनतन्मात्राइत्यादिनाविकृतयः॥ अ

विकारास्तुःप्रकृतयःपंचभूतान्यहंकृतिः मनोबुद्धिरहंकारश्चित्तंचपरिकीर्तितं॥ दशेंद्रियाणिभूतानिमनसासहषोडश ३७ ॥अव्यक्तंमहदित्यष्टौतन्मात्राश्चमहानपि॥३८॥ साहंकाराविकृतयःसप्ततत्वविदोविदुः॥ अग्नीषोमात्मकोदेहोविंदुर्यदुभयात्मकः॥३९॥ दक्षिणांशःस्मृतःसूर्योवामभागोनिशाकरः॥ ॥नाडीर्दशविदुस्तासुमुख्यास्तिस्रःप्रकीर्तिताः॥४०॥ इडावामेततनोर्मध्येसुषुम्णापिंगलापरे॥ मध्येतास्वपिनाडीस्यादग्नीषोमस्वरूपिणी॥४१॥ गांधारीहस्तिजिह्वाख्यासपूषालंबुषामता॥ यशस्विनीशंखिनीचकुहूःस्युःसप्तनाडयः॥४२॥ नाड्योनंताःसमुत्पन्नाःसुषुम्णापंचपर्वसु॥ मूलाधारादृतःप्राणस्ताभिर्व्याप्नोतितांततं॥४३॥ वायवोत्रदशप्रोक्तावह्नयोत्रदशस्मृताः॥ प्राणाद्यामरुतःपंचनागःकूर्मोथधनंजयः॥४४॥ कृकरःस्याद्देवदत्तइतिनामभिरीरिताः॥ अग्नयोदोषदूष्येषुसंलीनादशदेहिनः॥४५॥ बुभुक्षाचपिपासाचप्राणस्यमनसःस्मृतिः॥ शोकमोहौशरीरस्यजरामृत्यूषडूर्मयः॥४६॥ स्नाय्वस्थिमज्जानःशुक्रात्वङ्मांसास्राणिशोणितात्॥ षट्कौशिकमिदंप्रोक्तंसर्वदेहेषुदेहिनां॥४७॥ इत्थंभूतस्तथागर्भेपूर्वजन्मशुभाशुभं॥ स्मरंस्तिष्ठतिदुःखात्माऊर्ध्वदेहोजरायुणा॥४८ कालक्रमेणसशिशुर्मातरंक्लेशयत्यपि॥ संपीडितशरीरोथजायतेयमवाङ्मुखः॥४९॥

(१) अग्नीषोमात्मकमित्यारभ्यजायतेयमवाङ्मुखइत्यत्रशरीरवर्णनोयमर्थःस्पष्टः॥३७॥ ३८॥३९॥४०॥४१॥ ४२॥ ४३॥ ४४॥४५॥ ४६॥४७॥४८॥४९॥

जननानंतरमित्यादि रोदितुमिच्छतीत्युक्तं प्रसववेगेसौ जंतुर्भयनिर्वृत्यर्थं किमपि वक्तुमभिलषति॥ तस्यैव वक्तुरुद्युक्तस्यो विवक्षावशेन प्रयत्नो जायते स भावः परा
ख्यः स एव नाभिदेशं प्राप्य पश्यंतीसंज्ञां लभते॥ स एव हृदयं प्राप्तो मध्यमाख्यसंज्ञां प्राप्नोति॥ वक्त्रे वैखरीति च॥ निशब्देन कंठादितत्स्थानान्यभिधीयंते॥ ता
नि प्राप्य स्वरादिक्रमविशिष्टरूपेणाभिव्यक्तो वैखरीत्युच्यते॥ ततश्चेत्यारभ्य एकधेत्यंतप्रकृतेन ग्रंथेन कुंडलिनीस्वरूपं वर्णयति त्रिधामशब्देन श्वथिसे

सर्णां तिष्ठति निश्शेषो भीत्या रोदितुमिच्छति। ततश्चैतन्यरूपा सा सर्वगा विश्वरूपिणी॥५०॥ शिवसन्निधिमासाद्य नित्यानंद
गुणोदया॥ दिक्कालाद्यनवच्छिन्ना सर्ववेदानुगा शुभा॥५१॥ परापरविभागेन परशक्तिरियं स्मृता॥ योगिनां हृदयांभोजे
नृत्यंती नित्यमंजसा॥५२॥ आधारे सर्वभूतानां स्फुरंती विद्युदाकृतिः। शंखावर्तक्रमा देवी सर्वमावृत्य तिष्ठति॥५३॥ कुंड
लीभूतसर्पाणामंगश्रियमुपेयुषी॥ सर्वदेवमयी देवी सर्वमंत्रमयी शिवा॥५४॥ सर्वतत्वमयी साक्षात्सूक्ष्मात्सूक्ष्मतरा विभुः॥
त्रिधामजननी देवी शब्दब्रह्मस्वरूपिणी॥५५॥ द्विचत्वारिंशद्वर्णात्मा पंचाशद्वर्णरूपिणी॥ गुणिता सर्वगात्रेषु कुंडली परदेव
ता॥५६॥ विश्वात्मना प्रबुद्धा सा सूते मंत्रमयं जगत्॥ एकधा गुणिता शक्तिः सर्वविश्वप्रवर्तिनी॥५७॥ वेदादिबीजं श्रीबी
जं शक्तिबीजं मनोभवं॥ प्रासादं तुंबुरं पिंडं चिंतारत्नं गणेश्वरं॥५८॥ मार्तंडभैरवं दौर्गं नारसिंहं वराहजं॥ वासुदेवं हयग्रीवं
बीजं श्रीपुरुषोद्भवं॥५९॥ अन्यान्यपि च बीजानि तदा सोत्पादयति ध्रुवं॥ यदा भवति सा संविद्द्विगुणीकृतविग्रहा॥ ६०॥॥

मस्रूपा उच्यंते॥ कुमारस्य शरीरे सुषुम्णाख्येन परमेश्वरेणानुविद्धा परा शक्तिः कुंडलिनी मूलाधारान्निर्गच्छंती मंत्रजालानि तत्तद्वर्णबद्धानि चान्यानि वस्तुजं
त्राणि च॥ सूक्ष्मरूपेणोत्पादयतीत्याह॥ एकधा गुणिता शक्तिरित्यादिना॥ तत्तत्स्पष्टव्यक्तार्थानुगुणा तया सुषुम्णातः परमेश्वरेण यो सो संसर्गः॥ यथा शोभा
तं च्यंशलिसंयोगः परस्याशक्तेः। एवं गुणितशब्देनोच्यते॥ वेदादिबीजं प्रणवः॥ ॐ स्पष्टार्थमपरम् ५०॥५१॥५२॥५३॥ ५४॥५५॥५६॥५७॥५८॥५९

वर्णत्रयं अकार उकार मकाराः। त्रिपुष्करं तीर्थस्थानविशेषः। स्वरा उदात्तादयः। शक्ति
गुणत्रयं सत्वादि धामत्रयं। अग्नीषोमसूर्यादिदेवानां त्रयं। ब्रह्मादयः॥ वर्णत्रयं अकार उकार मकाराः। त्रिपुष्करं तीर्थस्थानविशेषः। स्वरा उदात्तादयः। शक्ति
त्रयं। प्रभुमंत्रोत्साहशक्तयः ब्रह्माविष्णुमहेश्वराणां शक्तयः॥ वृत्तित्रयं। अध्यापनयाजनप्रतिग्रहाः॥ नाडीत्रयं सुषुम्णादिः त्रिवर्गः धर्मार्थकामाः। पश्चि

यद्यदन्यज्जगत्यस्मिन्युग्मं तत्तद
हं सवर्णौ परात्मानौ शब्दार्थौ वा सरस्वये॥ सृजत्येषा परा देवी तदा प्रकृति पूरुषौ॥ ६१॥ पाशांकुशाक्षरं मंत्रं त्रैपु
जायत॥ त्रिगुणीकृत सर्वांगी चिद्रूपा शिवगेहिनी॥ ६२॥ प्रसूते त्रैपुरं मंत्रं मंत्रं शक्तिविनायकं॥ यत्रं त्रिग
टं चंडनायकं॥ ६३॥ सौरं मृत्युंजयं शाक्तं शांभवं दिनतासुतं॥ वागीशीत्र्यक्षरं मंत्रं नीलकंठं विषापहं॥ ६४॥ त्रिपुष्करं स्वरान्देवी ब्रह्मादीनां त्रयं
णितं देव्या लोकत्रयं गुणत्रयम्॥ धामत्रयं सा वेदानां त्रयं वर्णत्रयं शुभं॥ ६५॥ चतुःप्रकारगणिता शांभवी
त्रयं॥ वह्नेः कालत्रयं शक्तेः स्वयं वृत्तित्रयं महत्॥ ६६॥ नाडीत्रयं त्रिवर्गं सा यद्यदन्यत्त्रिधा मतं॥ चतुर्वर्णं महादेव्या देवी तत्त्व चतुष्टयम् ६७॥ चतुरः सागरा
र्शमदायिनी॥ ६७॥ तदानीं पद्मिनी वंधोः करोति चतुरक्षरं॥ चतुर्भुज्यगणेशानामात्मादीनां च
नं तः करणानां चतुष्टयम्॥ सूक्ष्मादींश्चतुरो भावान्विष्णोर्मूर्तिचतुष्टयम्॥ ६९॥ चतुष्टयमगणेशानामात्मादीनां च
तुष्टयम्॥ ओजापूजादिकं पीठं धर्मादीनां चतुष्टयम्॥ ७०॥ दमकादीन्गजान्देवी पश्यदन्यच्चतुष्टयम्॥ पंचधा
गणिता देवी शंभोः सर्वार्थसाधिनी ७१॥ १ नीवंधोः सूर्यस्यादिवीजानि॥ वनतिसूक्ष्मादिभावाः। परापश्यंती त्वच्यते॥ विष्णोर्मूर्ति

चतुष्टयं वासुदेवादि॥ आत्मचतुष्टयं॥ आत्मा अंतरात्मा परमात्मा ज्ञानात्मानः॥ दिविपीठाः॥ उड्याणजालंधरपूर्णगिरिकामरूपाख्याः॥ धर्मादि
चतुष्टयम्॥ धर्मज्ञानवैराग्यादि॥ ६१॥ ६२॥ ६३॥ ६४॥ ६५॥ ६६॥ ६७। ६८। ६९। ७०॥ गजाद्दमकादयः॥ ७१॥

मूर्तिपंचकमीशानादि ॥ कलाश्चतस्रे वक्ष्यंते ॥ तत्र ब्रह्मऋचः ॥ ईशानः सर्वविद्यानामित्यादयः ॥ षडाधारान् ॥ मूलाधारनाभिहृदयकंठभ्रूमध्यद्वा

त्रिपुरापंचकूटं सा तस्याः पंचाक्षरद्वयं ॥ पंचरत्नं महादेव्याः सर्वकामफलप्रदं ॥ ७२ ॥ पंचाक्षरं महेशस्य पंचवर्णानां रत्नम
तः संमोहनादिकान्यं चकामबाणान्सुरद्रुमान् ॥ पंचप्राणादिकान्वायून्पंचवर्णान्महेशितुः ॥ मूर्तिः पंचकलाः पंचपंचब्रह्म
ऋचः क्रमात् ॥ ७४ ॥ सृजत्येषा पराशक्तिर्वेदवेदार्थरूपिणी ॥ षोढा सा गणिता देवी धत्ते मंत्रं षडक्षरं ॥ ७५ ॥ षट्कूटं त्रिपुराम
त्रं गाणापत्यं षडक्षरं ॥ षडक्षरं हिमरुचेर्नारसिंहं षडक्षरं ॥ ७६ ॥ ऋतून्वसंतप्रभवान्षड्मोदादीन्गणाधिपान् ॥ कोशानूर्मी
न्ससाम्छतीः शाकिन्याद्याः षडध्वनः ॥ ७७ ॥ पंत्रं षड्गुणितं शक्तेः षडाधारानजीजनत् ॥ षड्विधं यज्जगत्यस्मिन्सर्वं तत्परमेश्व
री ७८ ॥ सप्तधा गणिता नित्या शंकरार्द्धशरीरिणी सप्तार्णं त्रिपुरामंत्रं सप्तवर्णं विनायकं ॥ ७९ ॥ सप्तकं व्याहृतीनां सा सप्त
वर्णं सुदर्शनं ॥ लोकान्गिरीन्स्वरान्यातून्मुनीन्द्वीपान्ग्रहानपि ॥ ८० ॥ समिधः सप्तसंख्याताः सप्तजिह्वा हविर्भुजः ॥ अन्य
त्सप्तविधं यच्च तदस्याः समजायत ॥ ८१ ॥ अष्टधा गणिता शक्तिः शिवमष्टाक्षरद्वयं ॥ विष्णोः श्रीकरनामानं मंत्रमष्टाक्षरं
परं ॥ ८२ ॥ अष्टाक्षरं हरेः शक्तेरष्टाक्षरस्य गं परं ॥ भानोरष्टाक्षरं दौर्गमष्टार्णं परमात्मनः ॥ ८३ ॥ अष्टार्णं नीलकंठस्य वासुदेवा
त्मकमनुम् ॥

दशांतान् ॥ शक्तितइत्यादिनाग्रे प्रदर्श्यंते ॥ शब्दब्रह्ममयी विभुः इत्यंतः श्लोकानां ग्रंथस्य स्पष्टार्थः ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥

॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥

यंत्रकामार्गलंदिव्यंदेवीयंत्रंपरार्गलं॥गंधाष्टकंशुभंदेवीदेवानांहृदयंगमं ८४ ब्राह्म्याद्याभैरवान्सर्पान्मूर्त्तौराशौवसूनपि॥८५
अष्टपीठंमहादेव्याअष्टाष्टकसमन्वितं॥अष्टौचप्रकृतीर्विद्वान्वक्रतुंडादिकान्क्रमात्॥८६॥अणिमादिगुणाल्लागान्चहरेर्मूर्त्तौ
यैमादिकान्॥अष्टात्मकंजगत्यन्यत्सर्वंवितनुतेतदा॥८७॥गणितानवधानित्यासूतेमंत्रंनवात्मकं॥नवकंशक्तितत्वानां
तत्वरूपामहेश्वरी॥नवकंपीठशक्तीनांश्रृंगारादीन्रसान्नव॥माणिक्यादीनिरत्नानिनववर्गप्रतानिसा॥८८॥नवकंप्राणवृत्ती
नांमंडलंनवकंशुभं॥यच्चान्यन्नवात्मकंलोकेसर्वमस्याउदेतिच॥९०॥दशधागणिताशंभोर्भाविनीभवदुःखहा॥दशाक्षरंगणपतेस्त
रितायादशाक्षरं॥९१॥दशाक्षरंसरस्वत्यायक्षिण्याश्चदशाक्षरं॥वासुदेवाक्षरंमंत्रंअम्बारूढादशाक्षरं॥९२॥त्रिपुरादशकूटंसा
त्रिपुरापादशाक्षरं॥नाम्नापद्मावतीमंत्रंराममंत्रंदशाक्षरं॥९३॥दशकंशक्तितत्वानांतत्वरूपामहेश्वरी॥नाडीनांदशकंविष्णो
रवतारान्दशक्रमात्॥९४॥दशकंलोकपालानांयच्चान्यत्सृजत्यसौ॥एकादशक्रमात्संविद्गुणितासाजगन्मयी॥९५॥रुद्रैकादशि
नीमाद्यांशक्तेरेकादशाक्षरं॥एकादशाक्षरंवाण्यारुद्रानेकादशक्रमात्॥९६॥समुद्गिरतिसर्वज्ञागणिताद्वादशक्रमात्॥नित्या
मंत्रंमहेशान्यावासुदेवात्मकंमनुं॥९७॥राशीन्मासान्हरेर्मूर्त्तौयंत्रंसाद्वादशात्मकं॥अन्यदेतादृशंसर्वंयतदस्याअजायत।
९८॥ चतुर्विंशतितत्वात्मायदाभवतिशोभना॥ गायत्रींसवितुःशंभोर्गायत्रींमदनात्मिकां ॥ ९९ ॥
॥

गायत्रीं विष्णुगायत्रीं गायत्रीं त्रिपदात्मनः॥ गायत्रीं दक्षिणामूर्तेर्गायत्रीं शंभुयोषितः॥१००॥ चतुर्विंशतितत्वानि तस्या
मास्तन्यरात्मनि॥ त्रिंशद्भेदगणिता सर्वमंत्रमयी विभुः॥१०१॥ सूते मृत्युंजयं मंत्रं नारसिंहं महामनुं॥ लवणाख्यं मनुं मं
त्रं वरुणास्य महात्मनः॥ १०२॥ हयग्रीवमनुं दौर्गं वाराहं वह्निनायकं॥ गणेशितुर्महामंत्रं मंत्रं सेनाधिपस्य च॥१०३॥ मंत्रं
श्रीदक्षिणामूर्तेर्मालामंत्रं मनोभुवः॥ त्रिषु भुवनवासिन्या अघोराख्यं महामनुं॥ १०४॥ भद्रकालीमनुं लक्ष्म्या माला
मंत्रं यमात्मकं मंत्रं सा देवकीसूनोर्मंत्रं श्रीपुरुषोत्तमं॥१०५॥ श्रीगोपालमनुं भूमेर्मनुं तारामनुं क्रमात्॥ महामंत्रं महा
लक्ष्म्या मंत्रं भूतेश्वरस्य च॥१०६॥ क्षेत्रपालात्मकं मंत्रं मंत्रमापन्निवारकं॥ सूते मातंगिनीं विद्यां शुभोदयां १०७ अ
नेन क्रमयोगेन गणिता शिववल्लभा॥ षट्त्रिंशतिं च तत्वानि शिवा निरचयत्यसौ ॥ १०८॥ अन्यान्मंत्रांश्च यंत्राणि शु
भदानि प्रसूयते॥ द्विचत्वारिंशता मूले गणिता शिववल्लभा॥ १०९ ॥ सा प्रसूते कुंडलिनी शब्दब्रह्ममयी
विभुः ॥

एवमर्थसृष्टिंप्रपंच्यशब्दसृष्टिंप्रपंचयति॥शक्तिंततइत्यादिना॥शक्तिर्नाममूलकारणस्यशब्दस्याद्युन्मुखीकरणावस्थां।ततोध्वनिः।ततस्तदनंतरंनादःशब्दस्य
चावस्थात्यंतसूक्ष्मान्निरोधिकादीनांस्वरूपंस्वयमेवाग्रेकथयिष्यति॥ततःपूर्वोक्तपरापश्यंतीत्यादिक्रमेणवर्णमालिकांसृजतीत्यर्थः॥कथंभूतांवर्णमालि

शक्तिंततोध्वनिस्तस्मान्नादस्तस्मान्निरोधिका॥११०॥ततोर्द्धेंदुस्ततोबिंदुस्तस्मादासीत्पराततः॥पश्यंतीमध्यमावा
ची वैखरीशब्दजन्मभूः॥१११॥इच्छाज्ञान क्रियात्मासौतेजोरूपागुणात्मिका॥क्रमेणानेनसृजतिकुंडलीवर्णमालिकां
॥११२ अकारादिसकारांताद्विचत्वारिंशदात्मिकां॥पंचाशद्वारगुणिता पंचाशद्वर्णजालिकां॥११३॥सृजेतद्वर्णतोभि
न्नात्कलारुद्रादिकान्क्रमात्॥निरोधिकाभवेद्वह्निरर्द्धेंदुःस्यान्निशाकरः॥११४॥अर्कःस्यादुभयोर्योगेबिंद्वात्मातेजसां
निधिः॥जातावर्णायतोबिंदोःशिवशक्तिमयादतः॥११५॥अग्नीषोमात्मकास्तेस्युःशिवशक्तिमयाद्रवेः॥येनसंभव
मापन्नाःसोमसूर्याग्निरूपिणः॥११६॥ इतिशारदातिलके प्रथमः पटलः समाप्तः॥

कां॥नपुंसकान्विहायअकारादिस
कारांताइत्येकः पक्षः॥ पंचासद्वारगुणिताकुंडलिनीअकारादिपंचाशद्वर्णमालिकांप्रसूतइत्यपरः॥एवमुख्यः॥उत्तरत्रप्रयोगोपयोगितयावर्णाना
मग्नीषोमात्मकत्वंसोमसूर्याग्निरूपत्वंचतन्निमित्तंदर्शयति॥जाताइत्यादिना॥इतिश्रीपं॰त्रिविक्रमोद्धारकृतौशारदाटीकायांगूढार्थदीपिकायांप्रथमःपट

॥८॥

संक्षेपतो वर्णानामुत्पत्तिमभिधाय इदानीं तेषामेव स्वरूपतयोत्पत्तिं कथयितुं कलाव्युत्पत्तिं च कथयितुं द्वितीयपटल आरभ्यते॥ ततो व्यक्तिरित्यादिना॥ तत्र सोमसूर्याग्निरूपत्वं क्रमेण स्वरव्यापकानां दर्शयति॥ एवं स्वरादिना तत्वात्मनः इति चतुर्विंशतितत्त्वरूपाः॥ यतो मकारः सूर्यस्वरूपः पुरुषः अं इति बिन्दुः शिवस्वरूपो ज्ञेयः॥ अः इति विसर्गः। शक्तिस्वरूपः शक्तिसहितात्परमेश्वराज्जगदुत्पत्तिर्यतः। तस्माच्छिवशक्त्यात्मकाद्वर्णसमुदायात् पंचभूतानामुत्पत्तिरिति वक्तुं भूतानां वर्णभेदमाह॥ त

ततो व्यक्तिं प्रवक्ष्यामि वर्णानां वदने नृणां॥ प्रेरिता मरुता नित्यं सुषुम्नारंध्रनिर्गताः॥१॥ कंठादिकरणोर्वर्णाः क्रमादाविर्भवंति ते
एव स्वराः स्मृताः सौम्याः स्पर्शाः सौराः शुभोदयाः॥२॥ आग्नेया व्यापकाः सर्वे सोमसूर्याग्निदेवताः॥ स्वराः षोडश विख्याताः स्पर्शास्ते पंचविंशतिः॥३॥ तत्त्वात्मानः स्मृताः स्पर्शा मकारः पुरुषो यतः॥ व्यापका दश ते काममथनधर्मप्रदायिनः॥४॥ ह्रस्वाः स्वरेषु पूर्वोक्ताः परे दीर्घाः क्रमादिमे॥ शिवशक्तिमयास्तेस्युर्बिंदुसर्गावसानकाः॥५॥ बिंदुः पुमान् रविः प्रोक्तः सर्गः शक्तिर्निशाकरः॥ स्वराणां मध्यमं पञ्चतुष्कं तु नपुंसकं॥६॥ पिंगलायां स्थिता ह्रस्वा इडायां संगताः परे॥ सुषुम्नामध्यगा ज्ञेयाश्चत्वारो ये नपुंसकाः॥७॥ विना स्वरैस्तु नान्येषां जायते व्यक्तिरंजसा॥ शिवशक्तिमयान्प्राहुस्तस्माद्वर्णान्मनीषिणः॥८॥ कारणात्पंचभूतानामुद्भूता मातृकायतः॥ ततो भूतात्मका वर्णाः पंचपंचविभागतः॥९॥ वाय्वग्निभूजलाकाशाः पंचाशल्लिपयः क्रमात्॥ पंच ह्रस्वाः पंच दीर्घा बिंद्वंताः संधिसंभवाः॥१०॥ पंचशः कादयः षक्षलसहांताः समीरिताः॥ सोमसूर्याग्निभेदेन मातृकावर्णसंभवाः॥११॥ अष्टत्रिंशत्कलास्तत्तन्मंडलेषु व्यवस्थिताः॥ ॥ ० ॥ ० ॥ ॥

तो भूतात्मका इति ह्रस्वाः॥ अ इ उ ऋ लृ दीर्घाः आ ई ऊ ॠ ॡ॥ संधिविधृता ए ऐ ओ औ अं विसर्गस्य कारणात्वात्पृथक् कृत्य गण्यते॥ पंचशः कादयः॥ यकारादयः॥ पंच॥ पंच षक्षलसहांताः॥ एवं भूतानां दश विज्ञेयाः॥ तत्त्वज्ञानप्रकारस्त्वग्रे वक्ष्यते॥ सोमसूर्याग्निभेदेन स्वरस्य पृथक्मापकं रूपं तु मातृकावर्णसमुदायात् यथाक्रमं षट्त्रिंशत्कला उत्पद्यंत इत्याह॥ ० ॥ ० ॥ ॥

अमृतामानदारत्यादिना॥ततः स्वप्रयोगे प्रयोगितपारदानीं पंचाशद्वर्णेभ्य एव रुद्रस्य श्रीकंठादिमूर्तयस्तच्छक्तयस्तथा विष्णुमूर्तयश्च तावत्यंचशक्तयश्च निरूप्यंते

शशिनीचंद्रिकाकांतिर्ज्योत्स्ना श्रीः प्रीतिरंगदा॥पूर्णा पूर्णामृता कामदापि न्यस्य
अमृतामानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः॥१२॥शशिनी चंद्रिका कांतिर्ज्योत्स्ना श्रीः प्रीतिरंगदा॥पूर्णा पूर्णामृता कामदापि न्यस्य
रजाः कलाः॥१३॥तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः॥सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा॥१४॥कभाद्या वसुदा
सौराष्टडांता द्वादशेरिताः धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिंगिनी १५ सुश्रीः सुरूपा कपिला हव्यकव्यवहे अपि॥यादीनां
दशवर्णानां कला धर्मप्रदा इमाः अभयेष्टकरा ध्येयाः श्वेतपीतारुणाः क्रमात्॥तारस्य पंचभेदेभ्यः पंचाशद्वर्णगाः कलाः॥१७॥
सृष्टिर्ऋद्धिः स्मृतिर्मेधा कांतिर्लक्ष्मीर्द्युतिः स्थिरा॥स्थितिः सिद्धिरिति प्रोक्ताः कचवर्गकलाः क्रमात्॥१८॥अकाराद्ब्रह्मणोत्प
न्नास्तप्तचामीकरप्रभाः॥एताः करधृताक्षस्रक्कुपंकजहूपकुंडिकाः॥१९॥जरा च पालिनी शांतिरैश्वरी रतिकामिके॥वरदा ह्लादिनी प्री
तिर्दीर्घा स्युष्टतवर्गजाः २०॥उकाराद्विष्णुनोत्पन्नास्तमालदलसन्निभाः॥अभीतिदरचक्रेष्टवाहवः परिकीर्तिताः॥२१॥तीक्ष्णा
रौद्री भया निद्रा तंद्री क्षुत्क्रोधिनी क्रिया॥उत्कारी मृत्युरेताः स्युः कथिताः यपवर्गजाः॥२२॥रुद्रेण मार्णादुत्पन्नाः शरच्चंद्रसमप्रभाः
॥उद्वहंत्योऽभयं शूलं कपालं बाहुभिर्वरं २३॥ईश्वरेणोदिता बिंदोः पीता श्वेतारुणासिता॥अनंताश्च षवर्गस्था जपाकुसुमसन्निभाः
॥२४॥अभयं हरिणं टंकं दधाना बाहुभिर्वरं निवृत्तिः सप्रतिष्ठा स्याद्विद्या शांतिरनंतरं २५॥इंधिका दीपिका चैव रेचिका मोचिका परा
सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायिनी तथा २६ व्यापिनी व्योमरूपाः स्युरनंताः स्वरसंयुताः॥सदाशिवेन संजाता नादेताः सितत्विषः
२७ अक्षस्रक्पुस्तकगुणाकपाला ढ्यकरांबुजाः॥न्यासे नु योजयेदादौ षोडशस्वरगाः कलाः॥२८॥इति पंचाशदाख्याताः कलाः सर्वस

श्रीकंठइत्यादिना॥ककारशादिषुन्यासादिषुचोपयोगितया॥इदानींमूर्तीर्मंत्रविद्याविभागेनेत्यादिना॥अधुनामंत्राणांप्रबोधकालएवफलदायकत्वात्त

श्रीकंठानंतसूक्ष्माश्चत्रिमूर्तिरमरेश्वरः॥२९॥अर्घीशोभारभूतिश्चतिथीशःस्थाणुकोहरः॥झिंटीशोभौतिकःसद्योजातश्चानुग्रहे
श्वरः अक्रूरश्चमहासेनःषोडशस्वरमूर्तयःपश्चात्क्रोधीशचंडीशपंचांतकशिवोत्तमाः॥३०॥अथैकरुद्रकूर्मैकनेत्राह्वचतुराननाः॥अ
जेशसर्वसोमेशास्तथालांगलिदारुकौ॥३१॥अर्धनारीश्वरश्चोमाकांतश्चाषाढिदंडिनौ॥अत्रिर्मीनश्चमेषाख्यालोहितश्चशिखीमतः
३२॥छगलंडद्विरंडेशौमहाकालाख्यवालिनौ॥भुजंगेशपिनाकीशखड्गीशाख्यबकास्ततः॥३३॥श्वेतभृग्वीशलकुलिशिवाःसंवर्तक
स्ततः॥एतेरुद्राःस्मृतारक्ताधृतशूलकपालकाः॥३४॥पूर्णोदरीस्याद्विरजाशाल्मलीतदनंतरं॥लोलाक्षीवर्तुलाक्षीचदीर्घघोणास
मीरिता॥३५॥सुदीर्घमुखिगोमुख्यौदीर्घजिह्वातथैवच॥कुंडोदर्यूर्द्ध्वकेशीचतथाविकृतमुख्यपि॥३६॥ज्वालामुखीततोज्ञेयाप
श्चादुल्कामुखीतथा सुश्रीमुखीचविद्यामुख्येताःस्युःस्वरशक्तयः॥३७॥महाकालीसरस्वत्यौसर्वसिद्धिसमन्विते॥गौरीत्रैलोक्य
विद्यास्यान्मन्त्रशक्तिस्ततःपरं॥३८॥आत्माशक्तिर्भूतमातातथालंबोदरीमता॥द्राविणीनागरीभूयःखेचरीचापिमंजरी॥३९॥रू
पिणीवीरिणीपश्चात्काकोदर्यपिपूतना॥स्याद्भद्रकालीयोगिन्यौशंखिनीगर्जिनीतथा॥४०॥कालरात्रिश्चकुब्जिन्याकपर्दिन्यपि
वज्रया॥जया चसुमुखेश्वर्यारेवतीमाधवीतथा॥४१॥वारुणीवायवीप्रोक्तापश्चाद्रक्षोवधारिणी॥ततश्चसहजालक्ष्मीर्व्यापिनीमा
ययान्विता॥४२॥एतारुद्रांकपीठस्थाःसिंदूरारुणविग्रहाः॥रक्तोत्पलकपालाभ्यामलंकृतकरांबुजाः॥४३॥केशवोनारायणोमाध
वोगोविंदविष्णवः।मधुसूदनसंज्ञोन्यःस्यात्त्रिविक्रमवामनौ॥४४॥श्रीधरश्चहृषीकेशःपद्मनाभस्ततःपरं॥दामोदरोवासुदेवःसंक
र्षणाइतीरिताः॥४५॥प्रद्युम्नश्चानिरुद्धश्चस्वराणांमूर्तयस्त्विमाः॥पश्चाच्चक्रीगदीशार्ङ्गीखड्गीशंखीहलीपुनः॥४६॥मुसलीशूल
संयुतापाशीस्यादंकुशीपुनः॥मुकुंदोनंदजोनंदीनरोनरकजिद्धरिः॥४७॥

दर्शयति॥आग्नेया इत्यादिना निर्दिष्टा मंत्राः फलदायकास्त्येवं मंत्राणां दोषं तन्निराकरणोपायं च दर्शयति॥छिन्नादिदोषदुष्टा इत्यादिनामन्येकं तेषां छिन्नादिदुष्टानां
कृष्णः सत्यः सात्वतः स्याच्छौरिः शूरो जनार्दनः॥भूधरो विश्वमूर्तिश्च वैकुंठः पुरुषोत्तमः॥४८॥बली बलानुजो बालो वृषघ्नश्च वृषः पुनः
हंसो वराहो विमलो नृसिंहो मूर्तयो हलां॥४९॥केशवाद्या रमेश्यामाश्च क्रशं खल सत्वराः॥कीर्तिः कांतिः स्तुतिः पुष्टिर्धृतिः क्षांतिः क्रि
पाद्या॥५०॥मेधा सहर्षा श्रद्धा च लज्जा लक्ष्मीः सरस्वती॥प्रीती रतिरिमाः प्रोक्ताः क्रमेण स्वरशक्तयः॥५१॥जया दुर्गा प्रभा सत्या चंडी
वार्धी विलासिनी॥विजया विरजा विश्वा विनदा सुनदा स्मृतिः॥५२॥ऋद्धिः समृद्धिः शुद्धिः स्याद्भुक्तिर्बुद्धिर्मतिः क्षमा॥रमोमाक्लेदिनी
क्लिन्ना वसुधा वसुदा परा ५३ परायणा सूक्ष्मा संध्या प्रज्ञा प्रभा निशा॥अमोघा विद्युता चैव कीर्त्याद्याः सर्वकामदाः ५४ एताः प्रियतमां
केषु निषण्णाः सस्मिताननाः। विद्युद्दामसमानांग्यः पंकजाभयवाहवः ५५ मातृकावर्णभेदेभ्यः सर्वे मंत्राः प्रजज्ञिरे। मंत्रविद्याविभागेन द्वि
विधा मंत्रजातयः॥५६ मंत्राः पुंदेवता ज्ञेया विद्याः स्त्री देवताः पुनः॥स्त्रीपुंनपुंसकात्मानो मंत्राः सर्वे समीरिताः ५७ पुंमंत्रा हुंफडंताः स्यु
र्द्विठांताः स्त्रियो मताः। नपुंसका नमोंताः स्युरित्युक्ता मनवस्त्रिधा॥५८॥शस्तास्ते त्रिविधा मंत्रा वश्यशांत्याभिचारके॥अग्नीषोमात्म
का मंत्रा विज्ञेयाः क्रूरसौम्ययोः॥५९॥कर्मणोर्विहितास्त्वथ विपल्लायाः समीरिताः।आग्नेया मनवः सौम्या भूयिष्ठं ह्मृताक्षराः ६०॥
आग्नेयाः संप्रबुद्ध्यंते प्राणे चरति दक्षिणे। भागेन्यस्मिंस्थिते प्राणे सौम्या बोधं प्रयांति च ६१ नाडीद्वयगते प्राणे सर्वे बोधं प्रयांति च। प्र
यच्छंति फलं सर्वे प्रबुद्धा मंत्रिणां सदा ६२ छिन्नादिदुष्टा मंत्रास्ते पालयंति न साधकं। छिन्नो रुद्धः शक्तिहीनः पराङ्मुख उदीरितः।
६३। बधिरो नेत्रहीनश्च कीलितः स्तंभितस्तथा॥दग्धस्त्रस्तश्च भीतश्च मलिनश्च तिरस्कृतः ६४ भेदितश्च सुषुप्तश्च मदोन्मत्तश्च मूर्च्छि
तः। हतवीर्यश्च हीनश्च प्रध्वस्तो बालकस्तनः॥६५॥कुमारस्तु युवा प्रौढो वृद्धो निस्त्रिंशकस्तथा॥निर्बीजः सिद्धिहीनश्च मंदः कूटस्तथा
पुनः ६६ निरंशकः सत्वहीनः केकरो बीजहीनकः। धूमितालिंगितौ स्यातां मोहितस्तु क्षुधार्तकः ६७ अतिदृप्तोंगहीनः स्यादतिक्रुद्धः समीरितः

लक्षणान्याह ॥ मनोरित्यादिना ॥ अनिलं वायुबीजं यकारसंयुक्तं वकारादिना वियुक्तं केवलं स्वराक्रांतं ॥ भूबीजं लकारः ॥ मायां ह्रींकारः ॥ ब्रह्म विष्णुमहेश्वरतत्वं ॥ एवं

अतिक्रूरश्च सत्रीडः शांतमानस एव च ॥ ६९ ॥ स्थानभ्रष्टस्तु विकलः सोतिवृद्धः प्रकीर्तितः ॥ निःस्नेहः पीडितश्चापि वक्ष्याम्येषां च लक्षणं ६९ मनोर्यस्यादिमध्यांतेष्वानिलं बीजमुच्यते ॥ संयुतं वा वियुक्तं वा स्वराक्रांतं त्रिधा पुनः ॥ ७० ॥ चतुर्धा पंचधा वाथ स मंत्रश्छिन्नसंज्ञकः ॥ आदिमध्यावसानेषु भूबीजद्वयलाञ्छितः ७१ रुद्धमंत्रः स विज्ञेयो भुक्तिमुक्तिविवर्जितः ॥ मायाग्नितत्वं श्रीबीजं एवं हीनश्च यो मनुः ७२ शक्तिहीनः स कथितो यस्य मध्ये न विद्यते कामबीजं मुखे माया शिरस्यंकुशमेव च ७३ असौ पराङ्मुखः प्रोक्तो हकारो बिंदुसंयुतः ॥ आद्यंतमध्ये बिंदुर्वा न भवेद्बधिरः स्मृतः ७४ पंचवर्णो मनुर्यः स्याद्रेफार्केंदुविवर्जितः ॥ नेत्रहीनः स विज्ञेयो दुःखशोकामयप्रदः ७५ आदिमध्यावसानेषु हंसः प्रासादवाग्भवौ ॥ हकारो बिंदुमान्जीवो वा चापि चतुष्कलः ७६ मायानमामि च पदं नास्ति यस्मिन्स कीलितः एकं मध्ये द्वयं मूर्ध्नि यस्मिन्नस्त्रपुरंदरौ ७७ विद्यते स तु मंत्रः स्यात्स्तंभितः सिद्धिरोधकः ॥ वह्निर्वायुसमायुक्तो यस्य मंत्रस्य मूर्द्धनि ७८ सप्तधा दृश्यते तं तु दग्धं मन्वीत तत्त्ववित् ॥ अस्त्रं द्वाभ्यां त्रिभिः षड्भिरष्टभिर्दृश्यतेक्षरैः ७९ त्रस्तः सोभिहितो यस्य मुखेन प्रणवः स्थितः ॥ शिवो वा शक्तिरथवा भीताख्यः स प्रकीर्तितः ८० आदिमध्यावसानेषु भवेन्मार्णचतुष्टयं ॥ यस्य मंत्रः स मलिनो मंत्रविज्ञैर्विवर्जयेत् ८१ यस्य मध्ये दकारो वा क्रोधो वा मूर्द्ध्नि द्विधा ॥ अस्त्रं तिष्ठति मंत्रश्च स तिरस्कृत ईरितः ८२ भ्यो द्वयं हृदयं शीर्षे वषड्वौषट् च मध्यतः ॥ यस्यासौ भेदितो मंत्रस्त्याज्यः सिद्धिषु सूरिभिः ८३ त्रिवर्णो हंसहीनो यः सुषुप्तः समुदाहृतः ॥ मंत्रो वाप्यथवा विद्या सप्ताधिकदशाक्षरः ८४ फट्कारपंचकादिर्यो मदोन्मत्त उदीरितः ॥ तद्वदस्त्रं स्थितं मध्ये यस्य मंत्रः स मूर्छितः ८५ विरामस्थानगं यस्य हृतवीर्यः स कथ्यते ॥ आदौ मध्ये तथा मूर्ध्नि चतुरस्त्रयुतो मनुः ८६ ज्ञातव्यो हीनरत्येषु यः स्याद्दशदशाक्षरः एकोनविंशत्यर्णो वा यो मंत्रस्तारसंयुतः ८७ ॥

क्रौं कामबीजं क्लीं ॥ अंकुशः क्रौं ॥ इंदुः वकारः ॥ सकारो वा ॥ अर्कः हकारः ॥ चतुःकलारूपं ॥ अस्त्रं फट् ॥ पुरंदरः लकारः ॥ क्रोधः हूंकारः ॥ शिवो बिंदुः ॥ शक्तिः विसर्गः ॥ 

हृल्लेखांकुशबीजाढ्यस्तंप्रख्यस्तंप्रचक्षते।।सप्तवर्णोमनुर्बालःकुमारोष्टाक्षरःस्मृतः ८८ षोडशार्णोथवाप्रौढश्चत्वारिंशल्लिपिर्मनुः।
।त्रिंशदर्णश्चतुःषष्टिवर्णोमन्त्रोशताक्षरः ८९ चतुःशताक्षरश्चापिवृद्धइत्यभिधीयते।नवाक्षरोध्रुवयुतोमनुर्निस्त्रिंशईरितः ९०
यस्यावसानेहृदयंशिरोमंत्रश्चमध्यतः।शिखावर्मचनस्यातांवौषट्फट्कारएववा ९१ शिवशक्त्यर्णहीनोवासनिर्बीजइतीरितः
एषुस्थानेषुफट्कारःषोढायस्मिन्नदृश्यते ९२ समन्त्रःसिद्धिहीनःस्यान्मंदःपंक्त्यक्षरोमनुः।क्रूरएकाक्षरोमंत्रःसएवोक्तोनिरंशकः
९३ द्विवर्णःसत्वहीनःस्याच्चतुर्वर्णश्चकेकरः।षडक्षरोबीजहीनःसार्द्धसप्ताक्षरोमनुः ९४ सार्द्धद्वादशवर्णोवाधूमितःसतुनिंदि
तः।सार्द्धबीजत्रयस्तद्वदेकविंशतिवर्णकः ९५ विंशत्यर्णस्त्रिंशदर्णोयःस्यादालिंगितस्तुसः।द्वात्रिंशदक्षरोमंत्रोमोहितःपरिकी
र्तितः ९६ चतुर्विंशतिवर्णोयःसप्तविंशतिवर्णकः।क्षुधार्तःसतुविज्ञेयश्चतुस्त्रिंशतिवर्णकः ९७ एकादशाक्षरोवापिपंचविंशतिव
र्णकः।।त्रयोविंशतिवर्णोवामंत्रोदृप्तउदाहृतः ९८ षड्विंशत्यक्षरोमंत्रःषट्त्रिंशद्वर्णकस्तथा त्रिंशदेकोनवर्णोवाप्यंगहीनोभिधीय
ते ९९ अष्टाविंशत्यक्षरोयएकत्रिंशदथापिवा।अतिक्रूरःसकथितोनिंदितःसर्वकर्मसु १०० त्रिंशदक्षरकोमंत्रस्त्रयस्त्रिंशदथापिवा
अतिक्रूरःसगदितोनिंदितःसर्वकर्मसु॥१०१ ऊनचत्वारिंशदर्णःसप्तत्रिंशदथापिवा कथयंत्यतिरिक्तंतंमंत्रंमंत्रविशारदाः १०२
चत्वारिंशक्रमारभ्यद्विषष्टिर्यावदायतेत। तावत्संख्यानिगदितामंत्राःसप्रौढसंज्ञकाः १०३॥पंचषष्ट्यक्षरायेस्युर्मंत्रास्तेशांतमान
साः।एकोनशतपर्यंतंपंचषष्ट्यक्षरादितः १०४ येमंत्रास्तेनिगदिताःस्थानभ्रष्टाश्चपाबुधैः।त्रयोदशाक्षरायेस्युर्मंत्राःपंचदशा
क्षराः १०५ विकलास्तेभिधीयंतेशतंसार्द्धशतंतथा।शतद्वयंद्विनवतिरेकहीनाथवापिसा १०६ शतत्रयंयावत्संख्यानिः
स्नेहास्तेसमीरिताः।। चतुःशतान्यथारभ्ययावद्वर्णसहस्रकं ॥१०७॥अतिवृद्धःसयोमेषुपरित्याज्यःसदाबुधैः।सहस्रार्णा

शा॰ति॰ ष्टमंत्राणांदोषाणामपगमनांतरेणफलजनकत्वाभावकफलदोषापगमोपायमाह ॥ दोषदुष्टेत्यादिना ॥ स्वताराराशिकोष्ठनामनुकूलान्भजेत्युक्तम् । तत्रवर्णो

टी॰मू॰ १० धिकामंत्रास्दंडकाःपीडिताह्वयाः । १०८ द्विसहस्राक्षरामंत्राःखंडशःशतधाकृताः ॥ ज्ञातव्यास्तोत्ररूपास्तेमंत्राएतेयथास्थिताः १०९
तथाविद्यास्त्वनेकाढ्यामंत्रिभिःकाम्यकर्मसु ॥ दोषानिमानविज्ञाययोमंत्रान्भजतेजडः ११० सिद्धिर्नजायतेतस्यकल्पकोटिशतैर
पि । इत्यादिदोषदुष्टांस्तान्मंत्रान्नात्मनियोजयेत् १११ शोधयेद्गुरुरूपवनोवह्न्यायोनिमुद्रया ॥ मंत्राणांदशकथ्यंतेसंस्काराःसिद्धिदायि
नः ११२ जननंजीवनंपश्चात्ताडनंबोधनंतथा ॥ अथाभिषेकोविमलीकरणाप्यायनेपुनः ११३ तर्पणंदीपनंगुप्तिर्दशैतामंत्रसंस्क्रियाः ।
मंत्राणांमातृकामध्यादुद्धारोजननंस्मृतं ११४ प्रणवांतरितान्कृत्वामंत्रवर्णाञ्जपेत्सुधीः । एतज्जीवनमित्याहुर्मंत्रतंत्रविशारदाः
११५ । मंत्रवर्णान्समालिख्यताडयेच्चंदनांभसा प्रत्येकंवायुनामंत्रीताडनंतदुदाहृतं ११६ विलिख्यमंत्रंतंमंत्रीप्रसूनैःकरवीरजैः
तन्मंत्राक्षरसंख्यातैर्हन्यात्तेनबोधनं ११७ स्वतंत्रोक्तविधानेनमंत्रीमंत्रार्णसंख्यया ॥ अश्वत्थपल्लवैर्मंत्रमभिषिंचेद्विशु
द्धये ११८ संचिंत्यमनसामंत्रंज्योतिर्मंत्रेणनिर्दहेत् । मंत्रेमलत्रयंमंत्रीविमलीकरणंत्विदम् ११९ तारंव्योमाग्निमनुयुक्दं
डोज्योतिर्मंत्रमतः । कुशोदकेनजप्तेनप्रत्यर्णंप्रोक्षणंमनोः १२० तेनमंत्रेणविधिवदेतदाप्यायनंमतं । मंत्रेणवारिणामंत्रं
तर्पणंतर्पणंस्मृतं ॥ १२१ तारमायारमायोगोमनोर्दीपनमुच्यते ॥ जप्यमानस्यमंत्रस्यगोपनंत्वप्रकाशनं १२२ संस्कारादश
शसंप्रोक्ताःसर्वमंत्रेषुगोपिताः । यान्कृत्वासंप्रदायेनमंत्रीवांछितमश्नुते १२३ स्वताराराशिकोष्ठानामनुकूलंभजेन्मनुं ॥ राम॰ १०

भ्यएवनक्षत्राणामुत्पन्नत्वात् ॥ केभ्यःवर्णेभ्यःकस्यकस्यनक्षत्रस्योत्पत्तिरित्याशंक्यनक्षत्राणांवर्णविभागमाह ॥ ॥ ॥

प्रापलोभेति।।अयं भावः।।प्रा इति द्विसंख्या।।लब्धा।।अ आ इति वर्णद्वयादश्विन्या उत्पत्तिः।।प इति एकसंख्या १ तया इकाराद्भरणी।।लो इति इ ई उ ऊ एभ्यः कृत्तिका।।भा ४ ऋ ॠ ऌ ॡ एभ्यो रोहिणी।।त्य १ ए एतस्मान्मृगशिरा।।५।।दुः १ ऐ एतस्मादार्द्रा।।प्रा २ ओ औ द्वाभ्यां पुनर्वसुः।।ज्यः १ कः एतस्मात्पुष्यः।।रु २ खग द्वाभ्यां अश्लेषा।।द्र २ घङ द्वाभ्यां मघा १०।स्या १ च एतस्मात्पूर्वाफाल्गुनी।।११।।त्र २ छज द्वाभ्यामुत्तराफाल्गुनी।रु २ झञ द्वाभ्यां हस्तः।रु २ टठ द्वाभ्यां चित्रा।कउ एतस्मात्स्वाती।।रं ढणा द्वाभ्यां विशाखा।।लो तथद ३ एभ्योऽनुराधा।।कघ १ ज्येष्ठा।।२ लो ३ नपफा मूलं।प १ ब पूर्वाषाढा।प १ भ उत्तराषाढा।२ मम श्रवणः।प्रा २

प्रापलोभापटुः प्राज्यरुद्रस्यात्ररुरुः कारं १२४ लोकलोपपटुः प्रापः स्वलोघोभेषु भेदिताः।।वर्णाः क्रमात्स्वरांत्यौ तु रेवत्यंतगतौ तदा १२५ जन्मसंपद्विपत्क्षेमः प्रत्यरिः साधको वधः। मित्रं परममित्रं च जन्मादीनि पुनः पुनः १२६ बालं गौरं खुरं शोणं शमी शोभेति राशिषु।।क्रमेणाभेदिता वर्णाः कन्यापा शारपः स्मृताः १२७ लग्नं धनं भ्रातृबंधुपुत्रशत्रुकलत्रकाः। मरणं धर्मकर्माय व्यया द्वादश राशयः।।१२८ चतुरस्रे लिखेद्वर्णाश्चतुःकोष्ठसमन्विते।।अकारादिक्षकारांतान्स्वनामाद्यक्षरादितः १२९।।सिद्धादीन्कल्पयेन्मंत्री कुर्यात्सिद्धादिभिः पुनः।।सिद्धादीन् सिद्धिदः सिद्धो जपात्साध्यो हुतादिभिः १३० ससिद्धः प्राप्तिमात्रेण साधकं भक्षयेदरिः।सिद्धार्णा बांधवाः प्रोक्ताः साध्यास्ते सेवकाः स्मृताः १३१ सुसिद्धाः पोषका ज्ञेयाः शत्रवो घातकामताः।दीपस्थानं समाश्रित्य कृतं कर्म फलप्रदम् १३२ चतुरस्रां भुवं भित्वा कोष्ठानां नवकं लिखेत्।।पूर्वकोष्ठादिविलिखेत्सप्तवर्गाननुक्रमात् १३३ लक्ष्मीशो मध्यकोष्ठे स्वरान्युग्मक्रमाल्लिखेत्। दिक्षु पूर्वादितो यत्नक्षेत्रास्याद्यक्षरस्थितं १३४ मुखं तत्तस्य जानीयाद्धस्तौ तु भयतः स्थितौ ।।

यर एतयोर्धनिष्ठा।यः १ ल शतभिषा।।खु २ व श पूर्वाभाद्रपदा।लो ४ ष स ह उत्तराभाद्रपदा।घो ४ अं अः ळ क्ष एभ्यः रेवती।।इति श्लोकार्थः।बिंदुविसर्गौ रेवत्यंशगतौ ज्ञेयौ।।अथ राशिभेदो माचष्टे।।बालेति।स्व ४ अ आ इ ई मेषः।ल ३ उ ऊ ऋ वृषः।२।गौ ३ ॠ ऌ ॡ मिथुनः।३।रं २ ए ऐ कर्कः।४।खु २ ओ औ सिंहः।पारं २ अं अः शषसहळक्षाः कन्या।शेषः।कवर्गस्तुला ७ चवर्गो वृश्चिकः।टवर्गो धनुः।तवर्गो मकरः।पवर्गः कुंभः।।म ४ यरलव मीनः।इति राशिषु भेदिता वर्णाः।इति श्लोकार्थः।राशीनां फलमाह।।लग्न इत्यादि।सिद्धसाध्यं निरूप्य प्रकारमाह।चतुरस्र इत्यादि।तेषां फलमाह।सिद्धादिति।सिद्धादिवर्णानां [illegible]

।कूर्मचक्रलेखनंतत्फलंचाह।१२६।चतुरस्रमिति।मंत्रजपस्थानंचाह।पुण्यक्षेत्रेत्यादिना।जपकालेनाहारनियममाह।।भैक्ष्यमित्यादिना।।४१।।इंद्रा
कोष्ठेकुक्षीउभेपादौहृच्छिरःपुच्छमीरितं १३५ क्रमेणानेनविभजेन्मध्यस्थमपिभागतः।मुखस्थोलभतेसिद्धिंकरस्थःस्वल्पजीवनः १३६
उदासीनःकुक्षिसंस्थःपादस्थोदुःखमाप्नुयात्।।पुच्छस्थःपीडयेन्मंत्रीवंधनोच्चाटनादिभिः १३७ कूर्मचक्रमिदंप्रोक्तंमंत्राणांसिद्धिसा
धनं।।पुण्यक्षेत्रंनदीतीरंगुहापर्वतमस्तकं १३८ तीर्थप्रदेशाःसिंधूनांसंगमाःपावनंवरं।उद्यानानिविविक्तानिविल्वमूलंतटंगिरेः १३९
देवतायतनंकूलंसमुद्रस्यनिजंगृहं।साधनेषुप्रशस्तानिस्थानान्येतानिमंत्रिणां १४० भैक्ष्यंहविष्यंशाकानिविहितानिफलंपयः।मूलं
तंसक्तुर्यवोत्पन्नोभक्ष्याण्येतानिमंत्रिणां १४१ पुरुषार्थसमावाप्त्यैसत्शिष्योगुरुमाश्रयेत्।मातृतःपितृतःशुद्धःशुद्धभावीजितेंद्रि
यः १४२ सर्वागमानांसारज्ञःसर्वशास्त्रार्थतत्ववित्।परोपकारनिरतोजपपूजादितत्परः १४३ अमोघवचनःशांतोवेदवेदार्थपारगः
योगमार्गानुसंधायीदेवताहृदयंगमः।१४४ इत्यादिगुणसंपन्नोगुरुरागमसंमतः।शिष्यःकुलीनःशुद्धात्मापुरुषार्थपरायणः १४५
अधीतवेदकुशलोदूरमुक्तमनोभवः।हितैषीप्राणिनांनित्यमास्तिकस्त्यक्तनास्तिकः १४६ स्वधर्मनिरतोभक्त्यापितृमातृहितोद्यतः
वाङ्मनःकायवसुभिर्गुरुशुश्रूषणेरतः १४७ त्यक्ताभिमानोगुरुषुजातिविद्याधनादिभिः।गुर्वाज्ञापालनार्थंहिप्राणव्ययरतोद्यतः
१४८ विहत्यचस्वकार्याणिगुरुकार्यरतःसदा।।दासवन्निवसेद्यस्तुगुरौभक्त्यासदाशिशुः १४९ कुर्वन्नाज्ञांदिवारात्रौगुरुभक्तिपराय
णः।आज्ञाकारीगुरोःशिष्योमनोवाक्कायकर्मभिः १५० योभवेत्सतुदाग्राह्योनेतरःशुभकांक्षया।मंत्रपूजारहस्यानियोगोपदिशतिसर्वदा।।
त्रिकालंयोनमस्कुर्यादागमाचारतत्ववित्।सएवशिष्यःकर्तव्योनेतरःस्वल्पजीवनः १५२ एतादृशगुणोपेतःशिष्योभवतिनापरः।
एकाब्देनभवेद्योग्योब्राह्मणोब्दद्वयान्नृपः १५३ वैश्योवर्षैस्त्रिभिःशूद्रश्चतुर्भिर्वत्सरैर्गुरोः।सशुश्रूषःपरिग्राह्योदीक्षायागव्रतादि

नीगुरुशिष्यलक्षणमाह मातृतःपितृतइत्यादिनाशिष्यस्यगुरुसेवाविधानमाह।एकाब्देत्यादिना १५४ ।।इतिगूढार्थदीपिकायांद्वितीयःपटलः ।। ।।

गुरुणिष्पलस्यग्रामादिग्रामा...

||

ततो वक्ष्यामीत्यादिना॥ तत्र प्रथमं वास्तुप्रकारः॥ तत्पूजाप्र

अथेदानीं दीक्षांगवास्तुपूजामंडपकरणकुंडादिनिर्माणं च यथावदुक्तं तृतीयपटलमारभ्यते॥ ततो वक्ष्यामीत्यादिना॥

अथेदानीं दीक्षांगवास्तुपूजामंडपकरणकुंडादिनिर्माणं च यथावदुक्तं तृतीयपटलमारभ्यते॥ राक्षसं वास्तुनामानं हत्वा धिष्ण्यपतत्तनं॥

ततो वक्ष्यामि दीक्षांगं वास्तुयागपुरःसरं॥ कृतेन येन मंत्रज्ञो दीक्षायाः फलमश्नुते॥ १॥ राक्षसं वास्तुनामानं हत्वा धिष्ण्यपतत्तनं॥

स्थितास्त्रिपञ्चाशद्देवास्तेभ्यः पूर्वं बलिं हरेत्॥ २॥ बलिमंडलमेतेषां यथावदभिधीयते। पूर्वापरायतं सूत्रं विन्यसेद्धुक्रमानतः ३

तन्मध्यं किञ्चिदालंब्य मत्स्यौ द्वौ परितो लिखेत्॥ तयोर्मध्ये स्थितं सूत्रं विन्यसेद्दक्षिणोत्तरं॥ ४॥ द्वाभ्यां द्वाभ्यां तथाग्राभ्यां कोणेषु

मकरान्लिखेत्॥ मत्स्यमध्ये स्थिताग्राणि तत्र सूत्राणि पातयेत्॥ ५॥ चतुरस्रं भवेत्तत्र चतुःकोष्ठसमन्वितं॥ तत्पुनर्विभजेन्मत्री

चतुःषष्टिपदं यथा॥ ६॥ ईशानाद्रक्षसो यावद्यावदग्नेः प्रभंजनः॥ एवं सूत्रद्वयं स्यात्कर्णसूत्रसमाहितः। ७ ब्रह्माणं पूजयेदादौ

मध्ये कोष्ठचतुष्टये॥ दिक्चतुष्कोष्ठपूर्वादि यजेदार्यमनंतरं ८ विवस्वंततो मित्रं महीधरमतः परं॥ कोणार्द्धकोष्ठद्वंद्वेषु द्व्या

द्विपरितः पुनः ९ सावित्रं सवितारं च शक्रमिंद्रजयं पुनः॥ रुद्रं रुद्रजयं विद्वानापं चाप्यापवत्सकं १० तत्कर्णसूत्रोभयतः कोष्ठद्वंद्वे

षु देशिकः॥ शर्वं गुहं चार्यमणं जंभकं पिलिपिच्छकं॥ ११॥ चरकीं च विदारीं च पूतनामर्चयेत्क्रमात्॥ अर्चयेद्दिक्षु पूर्वादिसार्द्धे

चांतपदे द्विमान् १२॥ अष्टावष्टौ विभागेन देवान्देशिकसत्तमः॥ क्रमादीशानपर्जन्यजयंताः शक्रभास्करौ १३ सत्यो वृषांतरिक्षौ च

दिशि प्राच्यामवस्थिताः। अग्निः पूषा च वितथो यमश्च गृहरक्षकः १४ गंधर्वो भृंगराजश्च मृगो दक्षिणदिग्गताः। निर्ऋतिर्दौवारिकश्च सु

ग्रीववरुणौ तथा॥ १५॥ पुष्पदंतासुरौ शोषरोगौ प्रत्यक्दिशि स्थिताः॥ वायुर्नागश्च मुख्यश्च सोमे भल्लाट एव च॥ १६॥ अर्गला स्त्या

दित्यदितौ कुबेरस्य दिशि स्थिताः॥ उक्तानामपि देवानां पदान्याहुर्वै पंचभिः १७ रजोभिस्तेषु चैतेभ्यः पायसान्नैर्बलिं हरेत्॥ अथवा

स्तु बलिः प्रोक्तः सर्वसंपत्समृद्धिदः १८ नक्षत्रराशिवाराणामनुकूले शुभेहनि॥ ततो भूमितले शुद्धे तृषांगारविवर्जिते॥ १९॥

कारं च निगद्यते॥ कृते रेचनी प्रकारपुरःसरं कथयति॥ १॥ २॥ ३॥ ४॥ ५॥ ६॥ ७॥ ८॥ ९॥ १०॥ ११॥ १२॥ १३॥ १४॥ १५॥ १६॥ १७॥ १८॥ १९॥

||

...ति
...गृ
१२

प्रागेवमंडलनिर्माणोत्यादिना॥मंडपरचनाप्रकारंदर्शयति।ततोभूमितलेत्यादिना॥त्यंकुरारोपणप्रकारंतन्मंडलरचनाप्रकारपुरःसरंकथयामिप्रागेवेत्यादिना॥अं
पुण्याहंवाचयित्वातुमंडपंरचयेच्छुभं।पंचभिःसप्तभिर्हस्तैर्नवभिर्वामितांतरं॥२०॥षोडशस्तंभसंयुक्तंचत्वारस्तेषुमध्यगाः॥अष्टह
स्तसमुच्छ्रायाःसंस्थाप्याद्वादशाभितः॥२१॥पंचहस्तप्रमाणास्तेविच्छिद्राश्चऋजवःशुभाः॥ततश्चमांशंनिखनेन्मेदिन्यांतत्रवित्तमः
॥२२॥नारिकेलदलैर्वंशैःस्थापयेत्तत्समंततः॥द्वारेषुतोरणानिस्युःक्रमान्क्षीरमहीरुहां॥२३॥स्तंभोच्छ्रायःस्मृतस्तेषांसप्तहस्तैः
पृथक्पृथक्॥दशांगुलप्रमाणेनतत्परीणाहईरितः॥२४॥तिर्यक्फलकमानस्यात्स्तंभानामर्द्धमानतः॥शूलानिकल्पयेन्मध्ये
तोरणोहस्तमानतः॥२५॥दिक्षुध्वजान्निवध्नीयाल्लोकपालसमप्रभान्॥वितानदर्भमालाद्यैरलंकुर्वीतमंडपं॥२६॥तत्त्रिभागमिते
स्रेत्रैःरत्निमात्रसमन्वितां॥चतुरस्रांततोवेदींमंडलायप्रकल्पयेत्।२७।प्रागेवदिक्षादिवसात्सप्तभिर्विद्विवदिनैः॥सर्वमंगल
संपत्त्यैविदध्यादंकुरार्पणं॥२८॥मंडपस्योत्तरेभागेशालांपूर्वापरायतां॥गूढांकुर्यात्ततस्तस्यांमंडलंरचयेत्सुधीः॥२९॥पंचह
स्तप्रमाणानिपंचसूत्राणिपातयेत्॥पूर्वापरायतान्येषामंतरंद्वादशांगुलं॥३०॥दक्षिणोत्तरसूत्राणितद्वदेकादशार्पयेत्॥पद्मा
नितत्रजायंतेचत्वारिंशत्प्रमार्ज्जयेत्३१पंक्त्यांवीथीश्चतत्रैतांस्तुष्कोभयपार्श्वयोः॥वीथ्योद्वेचचतुष्कोष्ठत्रयमत्रावशिष्यते३२
पद्मानिरंजयेत्तानिश्वेतपीतारुणासितैः॥रजोभिःश्यामलेनाथवीथीरापूर्वयेत्सुधीः३३पात्राणित्रिविधान्याहुरंकुरार्पणकर्मसु।पा
लिकाःपंचमुख्यश्चशरावाश्चचतुःक्रमात्॥३४॥प्रोक्ताःस्युस्सर्वतंत्रेषुहरिब्रह्मशिवात्मकाः॥एषामुच्छ्रायउन्नेयःषोडशद्वादशाष्टभिः=
३५अंगुलैःक्रमशस्तानिशुभान्यावेष्टयेत्तंतुना।प्रक्षाल्यदेशिकस्तेषुपदेष्वाहितशालिषु॥३६॥सुगंधिदर्भकूर्चेषुपश्चिमादिनिवेशये राम
त्।करीषवालुकामृद्भिस्तानिपात्राणिपूरयेत्।३७।सुधावीजेनवीजानिदुग्धैःप्रक्षाल्यतंत्रवित्॥मूलमंत्राभिजप्तानिपंचघोषपुरःस= १२
कुरपात्रनामान्याह॥पालिकेति॥सुधावीजंवकारः॥आढकः।आंभमाषायां।कुंडलु॥कुड्या॥कान्यकुब्जभाषायां॥अरहरा॥निष्पावाः॥उडदूभाषायांमसुल

कान्यकुब्जभाषायां।वलाकुलत्थी।श्रीभ्रमाषायांकोतुद्यु।भाषांतरेकुलथी।कंकुश्च भ्रमाषायां।इतरभाषायांकंग्रनी।कंरभानभ्रष्टयवाः।पूर्वोक्तक्रमेणकुंडानांरचना
प्रकारमाह।हस्तमात्रमित्यादिना॥हस्तलक्षणमाह।चतुर्विंशतीति।अंगुलीलक्षणमाह॥कर्तुरिति।मतांतरमाह।यवानामिति॥चतुरस्त्रीकृतेक्षेत्रेपंचधाविभजेधुना

आशीर्वादाभिर्द्विजातीनांमंगलाचारपूर्वकं।निर्वपेतेषुपात्रेषुदैशिकोयतमानसः ३९ शालिश्यामाढकीमुद्गतिलनिष्पावसर्षपाः।कु
लत्थकंगुमाषाश्चबीजान्यंकुरकर्मणि ४० हरिद्राद्भिःसमभ्युक्ष्यवस्त्रेणाच्छाद्यदैशिकः।बलिंत्रिविधपात्राणांदिक्षुपूर्वादितोहरेत्॥
प्रणवाद्यैर्नमोंतैश्चरात्रौरात्रीशतामभिः॥भूतानिपितरोयक्षानागाब्रह्माशिवोहरिः ४२ समानामपिरात्रीणांदेवताःसमुदीरिताः।भूते
भ्यःस्युर्लाजतिलहरिद्रादधिसक्तवः।४३ सान्नाःपितृभ्यःसतिलास्तंडुलाःपरिकीर्तिताः।करंभलाजायक्षेभ्योनास्तिकेलोदकान्विते ४४
सक्तुपिष्टंचनागेभ्योब्रह्मणेपंकजाक्षताः॥सापूपमन्नंशर्वायविष्णवेचगुडौदनं ४५ ततोलोकेश्वरेभ्योपिवितरेद्दिक्षुवह्निदीक्षायाम्
भिषेकेपुनर्नवेश्मप्रवेशने ४६ उत्सवेषुचसंपत्यैविदध्यादंकुरार्पणम्॥ प्राक्प्रोक्तेमंडपेविद्वान्वेदिकायाबहिस्त्रिधा ४७ क्षेत्रंविभज्यमध्यां
शेपूर्वादिपरिकल्पयेत्॥अष्टास्वाशासुकुंडानिरम्याकाराण्यनुक्रमात् ४८ चतुरस्रंयोनिमर्द्धचंद्रंत्र्यस्रंसुवर्तुलं षडस्रंपंकजाकारमष्टा
स्रंतानिनामतः ४९ आचार्यकुंडंमध्येस्याद्गौरीपतिमहेंद्रयोः।हस्तमात्रमितांभूमिंपूर्ववत्परिकल्पयेत् ५० समंतात्कुंडमेतेस्याच्चतुरस्रं
शुभावहं॥चतुर्विंशत्यंगुलाढ्यंहस्तंतत्रविदोविदुः ५१ कर्तुर्दक्षिणहस्तस्यमध्यमांगुलिपर्वणः।मध्यस्यदीर्घमानेनमानांगुलमुदी
रितं ५२ यवानामष्टभिःक्लृप्तमानांगुलमुदीरितं॥चतुरस्रीकृतेक्षेत्रेपंचधाविभजेत्सुधीः ५३ न्यसेत्पुरस्तादेकांशंकोणार्द्धार्द्धप्रमाण
तःभ्रामयेत्कोणमानेनतथान्यदपिमंत्रवित् ५४ सूत्रयुग्मंततोदद्यात्कुंडंयोनिनिभंभवेत्॥ चतुरस्रीकृतेक्षेत्रेदशधाविभजेत्पुनः ५५ ए
कमेकंत्यजेदंशमधऊर्ध्वंचतत्रवित्। ज्यासूत्रंपातयद्दद्यात्तन्मानाद्भ्रामयेत्ततः।५६॥ ॥तस्यपुरस्तात्कोणार्द्धार्द्धमानतःएकमंशंलंघयेत्।ततःपश्चि
मरेखामध्यादारभ्यतत्कोणपर्यंतमुत्तरतोदक्षिणपर्यंतंभ्रामयेदुभयतः।ततोभ्रामितिसूत्रद्वयाग्रमारभ्यपूर्वलांछनपर्यंतंदक्षिणोत्तरतःसूत्रद्वयंदद्यात्।ततोयोनिनि
भंकुंडंरम्यंभवति।चतुरस्रीकृतेक्षेत्रेदशधाविभक्तेअधऊर्ध्वंक्रमेणैकमंशंत्यक्त्वापुरतोज्यासूत्रंक्षेत्रसंदिग्धंपातयित्वाक्षेत्रप्रमाणादधिकंतदग्रपर्यंतंपश्चिमकोणाद

ततोऽर्द्धचंद्रनिभं कुंडं भवति॥ चतुर्द्धा विभक्ते क्षेत्रे पश्चिमकोणद्वयपार्श्वयोर्विभक्तचतुर्भागमध्ये एवमेकं भागं यावत्तावल्लांछयेत्॥ एकमेकमग्रतोपि लांछयेत् तस्मात्पश्चिमलांछनपर्यंतं सूत्रद्वयं कुर्यात्। पश्चिमलांछनद्वयं वर्द्धयेत्। एवं कृते रम्यं त्रिकोणं कुंडं भवेत्॥ अष्टादशधा विभक्ते क्षेत्रे बहिश्चतुर्दिक्षु॥ एकमेकमंशं लांछये

अर्द्धचंद्रनिभं कुंडं रमणीयमिदं भवेत्। चतुर्द्धा भेदिते क्षेत्रे न्यसेदुभयपार्श्वयोः॥ ५७॥ एकैकमंशं तन्मानादग्रतो लांछयेत्ततः। सूत्रयुग्मं ततः कुर्यात्त्र्यस्रं कुंडमुदाहृतं ५८ अष्टादशांशे क्षेत्रे च न्यसेदेकं बहिर्बुधः॥ भ्रामयेत्तेन मानेन वृत्तं कुंडमनुत्तमं ५९ अष्टधा विभजेत्क्षेत्रं मध्यसूत्रस्य पार्श्वयोः॥ भागं न्यसेदेकमेकं भागेनानेन मध्यतः। ६०। कुर्यात्पार्श्वद्वये मत्स्यचतुष्कं तत्र वित्तमः। सूत्रषट्कं ततो दद्यात्षडस्रं कुंडमुत्तमं ६१ चतुरस्रीकृतं क्षेत्रं विभज्याष्टादशांशतः॥ एकं भागं बहिर्न्यस्य भ्रामयेत्तेन वर्तुलं ६२ वृत्तानि कर्णिकादीनां बहिस्त्रीणि प्रकल्पयेत्॥ पद्मकुंडमिति प्रोक्तं विलोचनमनोहरं ६३ पूर्ववद्विभजेत्क्षेत्रं चतुर्विंशतिभागतः। एकं भागं बहिर्न्यस्य चतुरस्रं प्रकल्पयेत् ६४ अंतस्य चतुरस्रस्य कोणादर्द्धप्रमाणतः। बाह्यस्य चतुरस्रस्य कोणाभ्यां परिकल्पयेत् ६५ दिशं प्रति यथान्यायमष्टौ सूत्राणि पातयेत्। अष्टास्रं कुंडमेतद्धि तत्त्वविद्भिरुदाहृतं ६६ यावत्कुंडस्य विस्तारः खननं तावदीरितं कुंडानां यादृशं रूपं मेखलानां च तादृशं ६७ कुंडानां मेखलास्तिस्रो मुष्टिमाने तु ताः क्रमात्। उत्सेधायामतो ज्ञेया द्व्येकार्द्धांगुलसंमिताः ६८ अरत्निमाने कुंडे स्युस्तास्त्रिद्व्येकांगुलात्मिकाः। एकहस्तमिते कुंडे वेदाग्निनयनांगुलाः ६९ मेखलानां भवेद्दंतः परितो नेमिरंगुलात्। एकहस्तस्य कुंडस्य वर्द्धयेत्तत्क्रमात्सुधीः ७० दशहस्तांतमन्येषां अर्द्धांगुलवशात्पृथक्। कुंडे द्विहस्ते तास्त्वेपा रसवेदगुणांगुलाः ७१ चतुर्हस्तेषु कुंडेषु वसुतर्कयुगांगुलाः। कुंडे रसकरे ताः स्युर्दशाष्टत्वंगुलान्विताः ७२॥ ११ तं भ्रामयेत्तेन मानेन वर्तुलं कुंडमुत्तमं भवेत्॥ अष्टधा विभक्ते क्षेत्रे मध्यसूत्रस्य दक्षिणपूर्वपश्चिमपार्श्वयोरेकैकं लांछयेत्॥ क्षेत्राद्बहिः पूर्वपश्चिमसूत्रद्वयमध्येपि एकमेकमंशं न्यसेत् पूर्वलांछनमध्यसूत्रपार्श्वपूर्वलांछनपर्यंतं दक्षिणतः। तस्यैवोत्तरतः। पूर्वलांछनपर्यंतं सूत्रद्वयं कुर्यात्॥ तथैव पश्चिमे च लांछनीयं। उत्तरतो मध्यसूत्रलांछनपर्यंतं तस्यैव दक्षिणतः पश्चिमलांछनपर्यंतं सूत्रद्वयं दद्यात्॥ ०।

अनंतरं मध्यसूत्रदक्षिणोत्तरपार्श्वद्वयोर्लांछनयोर्मध्ये पूर्वपश्चिमाग्रं सूत्रद्वयं न्यसेत्॥ एवं षट्सूत्रपातने षडस्रं रमणीयं मंडलाकारं निष्पद्यते॥ अष्टादश
धा विभक्ते वहिरेकं भागं न्यस्य चतुर्दिक्षु भ्रामयेत्। पुनर्वर्तुलं कृत्वा केसराणि परिकल्पयेत्॥ तदुपरि वर्तुलं कृत्वा पत्राणि तदुपरि वर्तुलं भ्रामयेत्॥ एवं कृते पद्मनि
भं कुंडं भवति। चतुर्विंशतिधा विभक्ते क्षेत्रे दिक्षु वहिरेकैकभागं विन्यस्य पूर्वलांछनाद्दक्षिणलांछनपर्यंतं तस्मात्पश्चिमलांछनपर्यंतं॥ तस्मादुत्तरलांछनपर्यं
तम् तस्मात्पूर्वलांछनपर्यंते सूत्रे कृते चतुरस्राद्बहिश्चतुरस्रं भवति॥ अनंतरमेतस्य चतुरस्रकोणार्द्धमानेन वात्यचतुरस्रस्यैकैककोणपार्श्वयोरेकैकांशं लां

वसुहस्तमिते कुंडे भानुपंक्त्यष्टकान्विताः॥ ७३॥ दशहस्तमिते कुंडे मनुभानुदशांगुलाः॥ विस्तारोत्सेधतो ज्ञेया मेखला
सर्वतो बुधैः॥ ७४॥ होतुरग्रे योनिरासामुपर्यश्वत्थपत्रवत्॥ मुष्ट्यरत्न्येकहस्तानां कुंडानां योनिरीरिता॥ ७५॥
षट्चतुर्द्व्यंगुलायामविस्तारोन्नतिशालिनी॥ एकांगुलं तु योन्यग्रं कुर्यादीषदधोमुखं॥ ७६॥ एकैकांगुलतो
योनिं कुंडेष्वन्येषु वर्द्धयेत्॥ यवद्वयक्रमेणैव योन्यग्रमपि वर्द्धयेत्॥ ७७॥

(( कुर्येत्॥ दिशं प्रतीत्ययमर्थः॥ पूर्वकोण
स्य दक्षिणपार्श्वलांछनाद्दक्षिणकोणस्य पूर्वलांछनपर्यंतं आग्नेयसूत्रं तस्मात्पश्चिमलांछनपर्यंतं दक्षिणसूत्रं तस्माद्दक्षिणात्पश्चिमलांछनपर्यंतं निर्ऋ
तिसूत्रं पातयेत्॥ तस्मात्पश्चिमोत्तरलांछनपर्यंतं पश्चिमसूत्रं पातयेत्॥ ततोप्युत्तरपश्चिमपर्यंतं वायव्यसूत्रं पातयेत्॥ तस्मादनंतरं पूर्वलांछनपर्यंतं उ
त्तरसूत्रं पातयेत्॥ ततः पूर्वलांछनपर्यंतं ईशानसूत्रं पातयेत्॥ ततस्तदनंतरं दक्षिणलांछनपर्यंतं पूर्वसूत्रं इत्येवं दिशं प्रत्यष्ट सूत्राणि पातयेत्॥ एवं कृते
अष्टास्रं कुंडं रमणीयं भजति उत्तरो ग्रंथः स्पष्टः॥ वसुरष्टौ॥ तर्काः षट्॥ युगं चत्वारि॥ भानुर्द्वादश॥ पंक्तिर्दश॥ मनुश्चतुर्दश॥ ७० ॥ ॥

स्थलादारभ्येति॥तृतीयमेखलासंदर्श्यभूमिमारभ्येतियावत्॥नालेयोन्याधारंमृण्मयमूर्द्धीकारंकल्पयेत्॥सरंध्रकंमेखलाकालमध्योपरिस्तरणार्थंरंध्रे

स्थलादारभ्यनालंस्याद्योन्यामध्यंसरंध्रकं ॥ नार्पयेत्कुंडकोणेषुयोनिंतांतत्रवित्तमः ॥७८॥ कुंडानांकल्पयेदंतर्नाभिमंबुजसन्निभां ॥ तत्तत्कुंडानुरूपंवामानमस्यानिगद्यते॥७९॥मुष्टचरत्न्येकहस्तानांनाभिरुत्सेधतारतः॥द्वित्रिवेदांगुलोपेताकुंडेष्वन्येषुवर्द्धयेत्॥८०॥यवद्वयक्रमेणैवनाभिंपृथग्उदारधीः ॥योनिकुंडेयोनिमब्जकुंडेनाभिंविवर्ज्जयेत्॥८१॥नाभिक्षेत्रंत्रिधाभित्वामध्येकुर्वीतकर्णिकां ॥ बहिरंशद्वयेनाष्टौपत्राणिपरिकल्पयेत् ॥८२॥मुष्टिमात्रमितंकुंडंशतार्द्धेसमचक्षते॥शतहोमेरत्निमात्रंहस्तमात्रंसहस्रके॥८३॥द्विहस्तमयुतेलक्षेचतुर्हस्तमुदीरितं ॥ दशलक्षेतुषट्हस्तंकोट्यामष्टकरंस्मृतम् ॥ ८४ ॥ एकहस्तमितंकुंडंलक्षमेकंविधीयते ॥लक्षाणांदशकंयावत्तावद्धस्तेनवर्द्धयेत् ॥८५॥ दशहस्तमितंकुंडंकोटिहोमेविधीयते ॥ सर्वसिद्धिकरंकुंडंचतुरस्रमुदाहृतम् ८६ पुत्रप्रदंयोनिकुंडमर्द्धचंद्रंशुभप्रदम् ॥ शत्रुक्षयकरंत्र्यस्रंवर्तुलंशांतिकर्मणि ॥ ८७ ॥

कल्पयेत्॥ शास्त्रोक्तविधिनावक्ष्यमाणप्रकारेणात
मेवप्रकारंदर्शयति॥पद्मक्षेत्रस्येति ॥ संधिसंस्थानिपदानित्रीणीति॥पंकजस्यानघट्त्रिंशत्पदमध्यकोणानिहित्वात्रीणि ॥ ॥

छेदमारणयोः कुंडं षडस्रं पद्मसन्निभं। वृष्टिदं रोगशमनं कुंडमष्टास्रमीरितं। ८८ विप्राणां चतुरस्रं स्याद्राज्ञां वर्तुलमिष्यते॥ वैश्याना
मर्द्धचंद्राभं शूद्राणां त्र्यस्रमीरितं॥ ८९॥ चतुरस्रं तु सर्वेषां केचिदिच्छंति तांत्रिकाः। कुंडरूपं तु जानीयात्परमं प्रकृतेर्वपुः ९० प्राच्यां शिरः स
माख्यातं बाहू दक्षिणसौम्ययोः॥ उदरं कुंडमित्युक्तं योनिः पादौ तु पश्चिमे ९१ नित्यं नैमित्तिकं काम्यं स्थंडिले वा समाचरेत्॥ हस्तमात्रेण
तत्कुर्याद्वालुकाभिः सुशोभनं ९२ अंगुलोत्सेधसंयुक्तं चतुरस्रं समंततः। एवं प्रोक्तानि कुंडानि कथ्यते स्रुक्स्रुवौ ततः। ९३। प्रकल्पयेत्तु
वं यागो वस्य मार्गेण वर्त्मना। श्रीपर्णीशिंशपाक्षीरशाखिष्वेकमयं गुरुः। ९४। गृहीत्वा विभजेद्धस्तमात्रं षट्त्रिंशता पुनः। विंशत्यंशैर्भवेद्दं
डो विदिक्स्रैरष्टभिर्भवेत् ९५ एकांशेन मितः कंठः सप्तभागमितं मुखं। वेदिस्त्र्यंशेन विस्तारः कंठस्य परिकीर्तितः ९६। अग्रं कंठसमानं स्यान्मुखे
मार्गं प्रकल्पयेत्। कनिष्ठांगुलिमानेन सर्पिषो निर्गमाय च॥ ९७ वेदिमध्ये विधातव्या भागेनैकेन कर्णिका॥ विदधीत बहिस्तस्या एकांशेना
भिपंकजं। ९८ तस्य खातं त्रिभिर्भागैर्वृतमर्द्धांशतो भवेत्॥ अंशेनैकेन परितो दलानि परिकल्पयेत् ९९ मेखला मुखवेद्योः स्यात्परितो
र्द्धांशमानतः॥ दंडमूलाग्रयोः कुंभौ गुणवेदांगुलैः क्रमात् १०० अंजोपगायमांशैः स्याद्दंडस्यानाह ईरितं। षड्भिरंशैः पृष्ठभागो वेद्याः कूर्माकृ
तिर्भवेत् १०१ हंसस्य वा हस्तिनो वा पोत्रिणो वा मुखं लिखेत्। मुखस्य पृष्ठभागे स्याः संप्रोक्तं लक्षणं स्रुचः १०२ स्रुक्चस्त्व नु विंशतिभि
र्भागैरारचयेत्स्रुवं॥ द्वाविंशत्या दंडमानमंशैरेतस्य कीर्तितं १०३ चतुर्भिरंशैरानाहः कर्पाज्यग्राहताच्छिरः। अंशद्वयेन निखनेत्यं
केमृगपदं शतिं १०४ दंडमूलाग्रयोर्गंडी भवेत्तं करणभूषिता॥ स्रुवस्य विधिराख्यातः कथ्यते मंडलान्यथ। १०५ चतुरस्रे चतुष्को
ष्ठे कर्णसूत्रसमन्विते॥ चतुर्ष्वपि चतुष्कोष्ठकोण सूत्रचतुष्टयं १०६ मध्ये मध्ये यथा मत्स्या भवेयुः पातयेत्तथा॥ पूर्वापरायते द्वे द्वे मंतो
याम्योत्तरायते १०७ पातयेत्तद्वमत्स्येषु समं सूत्रचतुष्टयं ॥ पूर्ववत्कोणकोष्ठेषु कर्णसूत्राणि पातयेत् ॥ १०८ ॥ ॥

॥:४।५।२:१२b:५६

पुनः पंचाशद्वर्णैरेकस्मिन्वर्तुले अनुलोमेनान्यस्मिन्प्रतिलोमेन तद्बाह्ये चकारेणावेष्टयेदिति रहस्यं तदुक्तं॥ श्रीशंकराचार्यैः घटेनचापीति वह्निः पत्रसंपुटेन घटेनवे
ष्टयेत्तदुपरिसंपुटेनापि भूविंबेनापीति केचित्॥ एतत् घटार्गलनामयंत्रम्॥ अस्मिन्नर्थे आलिख्येत्यादि ग्रंथो योजनीयः॥ ग्रंथस्तु स्पष्टार्थः॥ यंत्रांतरमाह। वज्रांकिते
घटार्गलमिदं यंत्रं मंत्रिणां प्राभृतं मतं॥ पाशश्रीशक्तिकंदर्पकामशक्तीं दिरांकुशाः ९३ प्रथमोष्टाक्षरो मंत्रः ततः कामिनि रंजिनि॥ स्वा
हांतोष्टाक्षरः सद्भिरपरः परिकीर्तितः ॥९४॥ ह्रीं गौरि रुद्रदयिते योगेश्वरि सवर्मफट्॥ द्वितीयः षोडशार्णो यं मंत्रः सद्भिरुदीरितः
९५ लिखित्वा भूर्जपत्रादौ यंत्रमेतद्यथाविधि॥ धारयेद्वामबाहौ वा कंठे वा निजमूर्द्धनि॥ ९६॥ वशयेत्सकलान्मर्त्यान्विशेषेण म
हीपतिं॥ नीलपट्टे विलिख्यैतत्तद्गुटीकृत्य तत्पुनः ९७ साध्यप्रतिकृतौ सिक्थनिर्मितायां हृदिन्यसेत्॥ पात्रे त्रिमधुरापूर्णे नि
क्षिप्येनां विधानतः ९८ संपूज्य गंधपुष्पाद्यैर्बलिं निक्षिप्य रात्रिषु॥ मूलमंत्रं जपेन्मंत्री नित्यमष्टसहस्रकं ९९ सप्ताहाद्वांछि
तां नारीमाहरेत्स्मरविह्वलां॥ भूर्जपत्रे विलिख्यैतत्तद्गुटीकृत्य तत्पुनः १०० ताम्रपात्राभ्ररजतकांचनैर्वेष्टयेत्क्रमात्॥ तत्कुंभे
न्यस्य संपूज्य यथावद्भुवनेश्वरीं १०१ संस्पृश्य तं जपेन्मंत्री दिवाकरसहस्रकं॥ अभिषिंच्य प्रियं साध्यं व श्रीयाचं च गाशिखं १०२
कांतिं पुष्टिं धरारोग्ययशांसि लभते नरः॥ भित्तौ विलिख्य तद्यंत्रं पूजयेन्नित्यमादरात् १०३ भूतप्रेतपिशाचास्तं न वीक्षितुमपि क्षमाः
तद्विलिख्य शिरस्त्राणे साधितं धारयेद्दृढः १०४ युद्धे रिपून्बहून्हत्वा जयमाप्नोति पार्थिवः॥ वज्रांकिते वह्निपुरद्वये तां पाशांकुशा
द्यां पुरदरस्थसाध्यां॥ मध्ये षट्कोणषट्यवात्यवृत्तेपुनः पुनस्तां विलिखेत्समंतात् १०५ भूर्जे लिखितमेतत्स्यात्सर्ववश्यकरं नृणां॥ आ
रोग्यैश्वर्यजननं युद्धेषु विजयप्रदं १०६ लिखेत्सरोजे स्वरकेसराढ्ये वर्गाष्टपत्रे वसुधापुरस्थे॥ पाशांकुशाभ्यां गुराशाः प्रवद्धां मायां
लिखेन्मध्यगतां ससाध्यां १०७ सर्वोत्तममिदं यंत्रं धारितं कुरुते नृणां॥ आरोग्यैश्वर्यसौभाग्यविजयादीननारतं १०८ इतिश्री शार
दातिलके भुवनेश्वर्याः नवमः पटलः॥ त्यादिना षट्कोणं विलिख्य तत्कोणेषु लिखित्वा उपरिवृत्तं विरच्य तन्मध्ये पुनस्तामेव विलिखेद्वृत्ताकारेण कुं

कुमरोचनाभ्यां लिखित्वा चाभीप्सितफलसिद्धिः। पंचांत
रमाह। लिखेत्सरोजं स्य स्पष्टार्थमिदं॥ इति गूढार्थदीपिकायां न

॥अथभुवनेश्वरीमंत्रकथनानंतरं।श्रीत्वरिताविधानंवक्तुमारभते॥ततोभिधास्यइत्यादिना॥मंत्रमुद्धरति॥तारोमायेत्यादिना॥तारःप्रणवः माया भुवनेश्वरी वर्म हुं
।ऋद्धिः खकारः॥एकादशस्वरयुतः॥तदा ततः॥स्वे इति सिद्धं॥कूर्मः चकारः॥तदंतः छकारः॥भगवान् एकारयुतः॥छे इति सिद्धं॥क्षस्वरूपं स्त्री स्वरूपं दीर्घ
तनुच्छदं हूंकारः।संवर्तः क्षकारः भगवान् एकारयुतः॥ततः क्षे इति सिद्धं॥माया हृल्लेखा॥अस्त्रं फट्॥एवं द्वादशाक्षरो मंत्रः॥मायाद्वयवर्जितान् दशवर्णान् द
शस्थानेषु न्यसेत्॥इत्याह॥मायेति॥कूर्माद्यैरिति॥पूर्वपूर्ववर्जितमित्यर्थः॥चक्षे हृदयाय॥छेक्ष शिरसे॥क्षस्त्रीं शिखायै॥स्त्रीं हूं कवचाय हूं॥क्षे नेत्रत्रयाय॥क्षेफ

ततोभिधास्ये त्वरितां त्वरितं फलदायिनीं तारो माया वर्मबीजमृद्धिरीशस्वरान्विता १ कूर्मस्तदंत्यो भगवान्क्षस्त्री दीर्घतनुच्छदं
संवर्तो भगवान्माया फडंतो द्वादशाक्षरः ॥२॥ मुनिरर्जुननामाख्यातो विराट्छंदः समीरितं त्वरिता देवता प्रोक्ता पुरुषार्थफल
प्रदा ३ मायाविवर्जितान्वर्णान्मूर्द्धि भाले गले हृदि नाभिगुह्योरुयुग्मेषु जानुजंघापदेषु च ४ विन्यस्य व्यापकं कुर्यात्समस्ते
नैव साधकः कूर्माद्यैः सप्तभिर्वर्णैः पूर्वपूर्वविवर्जितैः ५ द्वाभ्यां द्वाभ्यां षडंगानि कल्पयेत्साधकोत्तमः श्यामां बर्हिकला
पशेखरयुतामाबद्धपर्णांशुकां गुंजाहारलसत्पयोधरभरामष्टाहिपान्बिभ्रतीं ताटंकांगदमेखलागुणरणन्मंजीरतां प्रापि
तान्कैरातीवरदाभयोद्यतकरां देवीं त्रिनेत्रां भजे ७ लक्षं संजप्य मंत्रज्ञो मनुमेनं जितेंद्रियः दशांशं जुहुयाद्बिल्वैर्मधुराक्तैः स ॥ ११ ॥
मिद्वरैः ८ हृल्लेखाकल्पिते पीठे नवशक्तिसमन्विते पूजयेत्त्वरितां देवीं वक्ष्यमाणविधानतः ९ संवर्तको बिंदुयुतः कवचं स
कलं वियत् वज्रदेहं पुरुहूद्दूं संभाव्य हिंगुलुद्वयं १० गर्जेयुग्मं वियत्सेंदु वर्मांत्यो दीर्घबिंदुमान् पंचाननाय हृदय पीठमंत्रः प्रकी

दृष्ट्वाध्यायेत्यनेन प्रकारेण न्यासं कुर्यात्॥ताटंकं कर्णभूषणं॥अंगदं बाहुभूषणं॥मंजीरं चरणभूषणं॥मेखला कटिभूषणं॥एवं रूपकृतां प्रतिमां अष्टनागाना
मासनं॥मंत्रमुद्धरति॥संवर्तक इत्यादिना॥संवर्तः क्षकारः॥सबिंदुयुतः॥ततः क्षं इति सिद्धं॥कवचं हुंकारः॥वियत् हकारः॥सकलं॥कलाशब्देन बिंदुः॥ततो
ह्क्ष्मिति सिद्धं भवति॥वज्रदेहं पुरुहूद्दं स्वरूपमेव॥हिंगुलुद्वयं स्वरूपं॥गर्जेयुग्मं स्वरूपं॥वियत् हकारः॥अंत्यं क्षकारः दीर्घबिंदुयुतः॥क्षामिति सिद्धं॥पंचानना
पस्वरूपं।हृदयपनमः इति पीठमंत्रः।उद्धृतः किंकरमं
त्रमुद्धरति।किंकरेत्यादिना।स्पष्टार्थः॥

दद्यादासनमेतेनमूर्त्तिंमूलेनकल्पयेत्॥अंगैःप्रणांतांगायत्रींकेसरेष्वर्चयेत्क्रमात् १२ दलेषुपूजयेद्देताःश्रीवीजाद्याःसुभूषिताः॥हुंकारींखे
चरींचंडांछेदनींक्षेपणींस्त्रियं॥१३॥हूंकारींक्षेमकारींचत्लोकेशांवरभूषिताः॥फट्कारीमग्रतोवात्येकोदंडशरधारिणीं॥१४॥द्वारस्यपार्श्व
योःपूज्येहैमवेत्रकरांवुजे॥जयाख्याविजयाख्याचकिंकरायपदंततः॥१५॥रक्षरक्षपदस्यांतेत्वरिताज्ञास्थिरोभव॥वर्मास्त्रांतेनमनुना
किंकरंतंवहिर्यजेत्॥१६॥लगुडंविभ्रतंकृष्णंकृष्णवर्वरमूर्द्धजं॥आरण्यैरुत्पलैःपुष्पैरतिमुक्तैःसुगंधिभिः॥१७॥पूजयेद्धूपदीपाद्यैर्नृत्यगीतै
र्मनोरमैः॥एवंसिद्धमनुर्मंत्रीनारीनरनरेश्वरैः॥१८॥मान्यतेवत्सरादर्वाक्तत्स्पृश्याजितधनेश्वरः॥योत्रिकुंडंप्रकल्प्याथकुर्याद्धोमंनिजेच्छ
या १९ मल्लिकाकुसुमैर्हुत्वावशयेदखिलंजगत्।कृत्याद्रोहादिशमनंपलाशकुसुमैर्हुतं॥२०॥इक्षुखंडैःशुभैर्हुत्वामहतींश्रियमाप्नुयात्॥
दीर्घमायुरवाप्नोतिदूर्वाहोमेनसाधकः।२१॥धान्यैःप्रक्षालितैर्हुत्वाश्रियमिष्टांसमाप्नुयात्॥यवैर्धान्यसमृद्धिःस्याद्गोधूमैरिष्टसिद्धयः२२
तंडुलैरक्षयात्सिद्धिःस्याद्वृद्धिर्महतीतिलैः॥मंत्रीनीलोत्पलैर्हुत्वानृपपत्नींवशंनयेत्॥२३॥प्रवुद्धैःपंकजैर्हुत्वावशंनयतिमेदिनीं॥अशो
कैःपुत्रमाप्नोतिमधुकैरिष्टमाप्नुयात्॥२४॥फलैर्जंवुभवैर्हुत्वालभतेधनमीप्सितं॥पुष्पैःपाटलिसंभूतैरिष्टामाप्नोतिसुंदरीं॥२५॥पुष्पैर्वकु
लसंभूतैःकीर्तिःस्यादनपायिनी॥दीर्घमायुर्भवेदाम्रैस्त्र्यंपकैःकांचनंभवेत् २६ कुर्वीतसर्षपैर्होमंशत्रोर्नाशकरंसुधीः॥पत्रैर्वकुलजै
र्हुत्वाशीघ्रमुन्मादयेदरीन्॥२७॥शाल्मलीपत्रहोमेनसपत्नान्नाशयेद्ध्रुवम्॥कोद्रवैःखंडनैस्तद्वन्निंवैर्विद्वेषयेन्मिथः।२८॥माषहोमेन
मूकःस्यादुन्मत्तोऽसौभवेदरिः॥अयुतंहोमसंख्यास्याज्जपस्तावान्प्रकीर्तितः २९ स्नानंतन्मंत्रितैस्तोयैःसर्वव्याधिहरंस्मृतं॥तज्जप्तंचुलुकंतोयं
मुखेक्षिप्तंविषापहं।३० आर्तायभेषजंदद्यान्मंत्रेणानेनमंत्रितं॥सभवेद्व्याधिनिर्मुक्तोमंत्रस्यास्यप्रभावतः॥३१॥त्रैलोहीमुद्रिकानेनमनुना
साधुसाधिता॥कृत्याद्रोहादिशमनीसर्वव्याधिविनाशिनी ३२ सर्वसंपत्प्रदानित्यंसर्ववश्यकरीमता॥यद्यद्वांछतिमंत्रज्ञस्तत्तदेतेनसाध्यते॥३३॥

शा॰ ति॰ टी॰ शू॰ ४४

कृ प्राक्प्रत्यक् कृतेचलर कापुंसः नां त



दश सूत्राणि। तथैव तिर्यक् पातयित्वा तन्मध्ये प्रणवं तन्मध्ये ठकारं तन्मध्ये जकारं तन्मध्ये सकारं ततः साध्याख्यां लिखेत्॥ इत्युपदेशः। रमात्र
मित्याचार्यः॥ पुनश्चतुर्दिक्षु चचतुष्कोष्ठचतुष्केषु प्रत्येकं जूंसः ववषडिति ग्रक्षरचतुष्टयं पलिखेदित्युपदेशः। आचार्यस्तु इत्येवं मनुते। के
चनैवं वर्णपंक्ति। आचार्यस्याप्ययमेव पक्षः संमत इति वयं मन्यामहे। कथं शैवांतमित्यत्र शैवांत मीशामिति त्रिकं वृत्तं शिखांतम
न्त्रशब्देन शिखामन्त्रमभिधीयते। तेन वषडंतमेवोक्तं भवतीति साधीयान्। अयं पक्षः पुनः शिष्टचतुः षष्टिपदेषु ईशकोष्ठमारभ्य पं

कृत्यापमृत्युरोगादीन्क्ष्वेडभूतमहाग्रहान्॥ जीवेद्वर्षशतं पुत्रैः पौत्रैर्लक्ष्म्या च नंदति ४२ श्रीसामा
यायामासाश्रीसानोयाज्ञेज्ञेयानोस्या मायालीलालीयामायाज्ञेलीलीलाज्ञेया ॥ ४४ ॥ लिखेच्च
तुःषष्टिपदेषु विद्वानीशादिकान्यादिरमामनुं तं ॥ वात्येयथावत्वरिताभिवीतं लोतैश्च वीतं वरकांचन
स्थं ४५ देशे पुरे वा नगरे गृहे वा विनिःक्षिपेच्चक्रमिदं यथावत्॥ तत्र भवं गोमहिषाभिवृद्धिः सम्यक् प्रजा
सस्यसमृद्धयः स्युः॥ ४६॥ कवचं भगवान्श्चंडो मेरुः सर्गसमन्वितः॥ त्रिकंटकी समाख्याता विद्यावर्णत्रया
त्मिका ४७ ह्रिरुक्तैर्मंत्रवर्णैः स्यादंगक्लृप्तिरितीरिता॥ नीलानाभेरधस्तादरुणरुचिरधश्कंठदेशात्सितास्या
द्व्यैर्दंष्ट्राकराले रुदरपरिगतैर्भीषणां गीत्वतुर्भिः॥ दीपोकंबुरथांगंकरसरसिरुहैर्धारयंती जयातः सूर्जेन्द्वीतां सुखं डाभवतु
भयहरा देवता वस्त्रिनेत्रा॥ ४९॥ त्रिलक्षं प्रजपेदेनमाज्येनांते दशांशतः॥ हुत्वा प्राक्प्रोक्तमार्गेण पूजयेत्तां त्रिकंटकीं॥ ५०।

तिशः सर्वतोभद्रात्मकं लक्ष्मीमनुमेकवारं प्राक् लिखित्वा पुनस्तमेव लक्ष्मीमनुं निर्ऋतिकोष्ठमारभ्य पंक्तिशो लिखेत्॥ पुनश्चतुरस्रे वृत्ते पत्राष्टकमष्ट राम॰
दलानि विरच्य सकोणेषु॥ चतुर्दलानि कृत्वा एवं कृते दिक्षु प्रत्येकं दशदलानि भवंति॥ तत्र त्वरिताख्यां विद्यां लिखेद्दशशः॥ शस्त्रादिर्वषडंतयेत्युक्तमन्त्र ४४

तत्॥एतत्
अत्रपदस्थानेफट्कारस्थानेप्रयुक्तवषट्कारांतयेति॥तथाचोक्तंतंत्रांतरे॥त्वरितावषडंतत्वात्फट्कारपरिवर्जितेति॥तदुपरिवृतंकृत्वालांतैर्वकारैर्वेष्टयेत्॥एतत्
अत्रपदस्थानेफट्कारस्थानेप्रयुक्तवषट्कारांतयेति॥तथाचोक्तंतंत्रांतरे॥त्वरितावषडंतत्वात्फट्कारपरिवर्जितेति॥तदुपरिवृतंकृत्वालांतैर्वकारैर्वेष्टयेत्॥एतत्
मंत्रयुक्तफलदं॥यंत्रांतरमाह॥लिखेच्चतुःषष्टीति॥अयमर्थः॥प्राक्प्रत्यग्यानवरेखाःदक्षिणोत्तरेपि॥तथैवलिखित्वातत्रईशानादिद्वात्रिंशत्कोष्ठेषुलक्ष्मीमंत्रंअ
सारंशोधयित्वा॥पुनर्निरृतिमारभ्योत्तरतःपश्चाद्बहिस्त्वरितयाचतुर्दिक्षुवेष्टयेत्॥लांतैर्वकारैर्बहिः॥एतदुक्तफलप्रदं॥मंत्रांतरमुद्धरति॥कक्वमिति॥कवर्गंहुंकारं
भगवानेकारयुक्तःखंडः॥खेइतिसिद्धं॥मेरुःक्षकारः॥विसर्गःतद्युक्तःक्षः॥एवंबीजत्रयात्मकः॥त्रिकंटकीमंत्रः॥कंबुःशंखःरथांगंचक्रं॥त्रिशूलमुद्राअंगुष्ठ

त्रिशूलमुद्रांपाणिभ्यांबध्वात्मानंत्रिकंटकीं ध्यायन्स्पृष्ट्वाजयेद्गस्तंसद्यस्तंमुंचतिग्रहः॥५१॥क्षेरुद्रास्त्रीत्रिवर्णोयंविद्याव
श्यत्रिकंटकी॥मंत्रार्णैर्दीपितैःकुर्यादंगषट्कंयथापुरा ५२॥पूर्वोक्तांदेवतांध्यायन्मंत्रंत्रिनियुतंजपेत्।दशांशंसर्पिषाहु
त्वावशयेद्बहूनितान्नरान् ५३ तारोमायावाग्भवोतेनित्यक्लिन्नेमदद्रवे॥वाउक्त्वापूर्ववह्निजायांतोमंत्रःपंचदशाक्षरः ५४ द्वाभ्यां
द्वाभ्यांपुनर्द्वाभ्यांद्वाभ्यांपंचभिरक्षरैः वाचंविनासमस्तेनाप्यंगषट्कमथाचरेत्॥द्वीपंत्रिकोणविपुलंसुरद्रुममनोहरंकू
जत्कोकिलनादाढ्यंमंदमारुतसेवितं ५६ भृंगपुष्पलताकीर्णमुद्यच्चंद्रदिवाकरं॥स्मृत्वासुराब्धिमध्यस्थंतस्मिन्माणिक्य
मंडपे ५७ रत्नसिंहासनेन्यस्तेत्रिकोणोज्ज्वलकर्णिके॥पद्मेसंचिंतयेद्देवींसाक्षात्त्रैलोक्यमोहिनीं॥५८॥ नित्यांभजेबाल
शशांकचूडांपाशांकुशौकल्पलतांकपालं॥हस्तैर्वहंतीमरुणांत्रिनेत्रामास्फालयंतींकरवल्लकीं तां॥५९॥त्रिलक्षंप्रज
पेन्मंत्रमाज्येनजुहुयात्ततः॥दशांशंपूजयेत्पीठंचतुःशक्तिसमन्वितं॥६०॥श्रीपूर्वोद्राविणीवामांशंभुकोणेसमर्चयेत्॥
श्रीह्लादकारिणींज्येष्ठामोंकाराद्यांहुताशने ६१ पूजयेत्क्षोभिणींरौद्रींउकाराद्यांनिशाचरे॥वायौयजेद्रुत्यशक्तिंवाग्भवा
द्यांविचक्षणः॥६२॥ \\ पाकनिष्ठिकांबध्वाअंगुलीत्रयंप्रसारयेत्॥मंत्रांतरमाह॥क्षेस्त्रीतिक्षकारयुक्तित्रिकंटकीमंत्रः॥स्पष्टार्थमपरं॥मंत्रांतरमा
ह॥तारोमायेतितारःप्रणवःमायाभुवनेश्वरी॥वाग्भवंऐंकारःनित्यक्लिन्नेमदद्रवे॥स्वरूपंवाक्स्वाहपूर्वोक्तोवह्निजायास्वाहाकारः॥न्यासमाह॥द्वाभ्यामिति॥वाचंवि

नावाग्भवबीजंविनाइति॥आद्यंतेतिआदिषुग्मंअस्त्रआस्य
रूपंस्त्रीस्त्रीति॥अन्त्ययुग्मंअस्त्रः॥क्लीबवर्जिताःनपुंसकवर्ज

जिताः॥अवशिष्टस्वराः विंदुंताःकेत्तोंईंउंऊंएंऐंओंऔं एते प्रत्येकं दूतीनां मंत्राः॥मन्मथव्योमेति॥ द्रीं॥ एतदनंगादीनां वीजं॥क्लीवेति॥क्लीवः नपुंसकचतु
ष्टयं ओष्ठद्वयं एऐ। एतद्वर्जितस्वरसमन्वितश्चतुराननः ककारो विंदुमान्॥ कंकांकिंकींकुंकूंकेंकैंकंकः॥ एतानिकामांगनानां वीजानीत्यर्थः॥मंत्रांतरमुद्

मायाद्यमासनं दत्वा मूर्तिं मूलेन कल्पयेत्॥ अत्र संपूजयेद्देवीं वक्ष्यमाणक्रमेणतु ६३ अंगार्चनं केसरेषु दलेष्वेताः समर्चयेत्॥ आद्या नित्या सुभद्राऽन्या मंगला नरवीरिणी ६४ सुभगा दुर्भगा भूयः सप्तमी स्यान्मनोन्मनी॥ अष्टमी रुद्ररूपा च वीणावादनतत्परा॥ ६५॥ रक्ता मनोरमा द्रुत्यः सर्वेषां मदमंथराः॥ आद्यंतयुग्मरहिताः स्वराः क्लीवविवर्जिताः ६६ विंदुता मनवस्तासामनंगास्मरमन्मथाः कामो मारश्च पंचेषु पाशांकुशधनुर्भृतः ६७ अपरांगनिषंगाढ्या रक्ताः पूज्याः सुभूषणाः॥ मान्मथं व्योमसंगाढ्यं तेषां वीजमुदाहृतं ६८ रतिः स्याद्धिरतिः प्रीतिर्विप्रीतिर्मतिदुर्मती॥ धृतिश्च विधृतिस्तुष्टिर्वितुष्टिश्च दश स्मृताः ६९ रक्ता वीणाकरा द्वे द्वे कामानां पार्श्वयोः स्थिताः॥ सर्वाभरणसंपन्नाः पूज्याः स्मेरमुखांबुजा॥ ७०॥ क्लीवो ष्ठद्वयनिर्मुक्तस्वराढ्यश्चतुराननः॥ विंदुमान्वीजमेतासां क्रमाच्चोक्तेश्वरान्वहिः ७१ एवं संपूजयेद्देवीं देवानामपि दुर्लभां॥ परमैश्वर्यमाप्नोति प्रार्थ्यते वनिताजनैः ७२ वाग्भवं मान्मथं वीजं नित्यक्लिन्ने मदद्रवेति च॥ ठद्वयं वह्निवधूर्मंत्रो द्वादशार्णोयमीरितः ७३ ऋषिः संमोहनश्छंदो निचृन्नित्या च देवता॥ वाचा कृत्वा षडंगानि नित्यां ध्यायेन्निजेष्टदां॥ ७४॥ अर्द्धेंदुमौलिमरुणाममराभिवंद्याममभोजपाशसृणिपूर्णकपालहस्तां॥ रक्तांगरागवसनाभरणां त्रिनेत्रां ध्यायेच्छिवस्य वनितां मदविह्वलांगीं ७५ चतुर्लक्षं जपित्वा तां तेमधुराक्तैर्मधूकजैः॥ कुसुमैरयुतं हुत्वा तोषयेद्गुरुमात्मनः ७६॥ ९९

रति·इतरत्स्पष्टं·मंत्रांतरमाह॥मंत्रोद्धारः स्पष्टः॥ अविरोहितार्थमन्यत्॥मंत्रांतरमाह॥ श्रीमायेति सोविसर्गः॥ आरग्वधः राजवृक्षः त्वतुरंगुलः प्रता॥ फलपरोग्रंथो निगरव्याख्यातः॥ मंत्रांतरमाह॥ पाशांकुशेति कथितार्थं एवं वीजद्वयरुद्रा भुवनेश्वरी॥ झिंपिशः एकारः भगानह

शक्तिपीठेयजेद्देवींवक्ष्यमाणेनवर्त्मना॥अंगान्यर्च्चेद्यथापूर्वंततःशक्तीरिमायजेत् ७७ नित्यानिरंजनाक्लिन्नाक्लेदिनीमदनातुरा॥मदद्रवाद्राविणीचद्रविणे त्यष्टशक्तयः ७८॥नीलोत्पलकपालाढ्यकरारक्तांबुजेक्षणाः॥लोकपालान्यजेद्दंत्येवाहनायुधसंयुतान्॥७९॥सिद्धमंत्रंजपेन्मंत्रीसहस्रंशयनस्थितः॥यांविचिंत्यस्त्रियंरात्रौसासमायातितत्क्षणात्॥८०॥वाग्भवाद्यानंतरंनित्यक्लिन्नेभूयोमदद्रवे॥हृद्धांतोरविसंख्यार्णोमनुर्वश्यप्रदायकः॥८१॥अंगिराःस्यादृषिस्त्रिष्टुप्छंदोमुनिभिरीरिता॥वज्रप्रस्तारिणीप्रोक्तादेवताभीष्टदायिनी॥८२॥वाग्भवेनषडंगानिविदध्यान्मंत्रविन्नरः॥वज्रप्रस्तारिणींध्यायेत्समाहितमनास्ततः॥८३॥रक्ताब्धौरक्तपोतेरविदलकमलाभ्यंतरेसन्निषण्णांरक्तांगींरक्तमौलिस्फुरितशशिकलांस्मेरवक्त्रांत्रिनेत्रां॥बीजापूरेषुपाशांकुशमदनधनुःसत्कपालानिहस्तैर्बिभ्राणामानतांगींस्तनयुगलभरादंबिकामाश्रयामः॥८४॥मंत्रीमंत्रंजपेल्लक्षंजपांतेजुहुयात्ततः॥अयुतंराजवृक्षोत्थैर्घृतसिक्तैःसमिद्धैः॥८५॥शक्तिपीठेयजेद्देवीमरुणैःकुसुमादिभिः॥अंगानिकेसरेषुस्युर्स्वेनीपादलेष्विमाः॥८६॥हृल्लेखाक्लेदिनीक्लिन्नाक्षोभिणीमदनातुरा॥निरंजनारागवतीसप्तमीमदनावती॥८७॥मेखलाद्राविणीपश्चाद्वेगवत्यपरास्मृता॥कपालोत्पलधारिण्यःशक्तयोरक्तविग्रहाः॥८८॥मातरोदिग्विदिक्ष्वर्च्याःपुनःपूज्यादिगीश्वराः॥भजेन्मंत्रीमनुंनित्यमर्चनादिभिरादरात्॥८९॥दारिद्र्यरोगनिर्मुक्तःसजीवेच्छरदांशतं॥अस्मिन्मंत्रेरतोमंत्रीवशयेदखिलंजगत्॥९०॥नित्यंमंत्रेर्वेथःकुर्यान्मुखलालनमन्वहम्॥अंजनंतिलकंपुष्पंधारयेन्मंत्रितंसुधीः॥९१॥तांबूलंमंत्रितंभक्ष्येन्मंत्रीसःस्याज्जगत्प्रियः॥श्रीमायामदने प्रोक्तोमंत्रोबीजत्रयात्मकः॥९२॥ऋषिःसंमोहनःछंदोगायत्रीदेवतामनोः॥त्रिपुटाख्याहृदुक्तैस्तैर्बीजैरंगानिषट्क्रमात्॥ ९३॥ पारिजातवनेरम्येमंडपेमणिकुट्टिमे ॥ रत्नसिंहासनेसौम्येपद्मेषट्कोणशोभिते ॥९४॥ अधस्तात्कल्पवृक्षस्यनिषण्णांदेवतांस्मरेत्॥

स्वाहाकारांतः॥प्रणवादिः॥न्यासमाह॥ द्वाभ्यामिति॥ॐ आं हृदयाय नमः॥ॐ ह्रीं शिरसे स्वाहा॥ॐ क्रों शिखायै॥ॐ एहि कवचाय हुं॥ॐ परमेश्वरि नेत्रत्रयाय वौषट्॥ॐ स्वाहा अस्त्राय फट्॥ध्यानमाह॥ रक्तामिति॥ बाणलक्षं पंचलक्षं॥ तेनैव लवणहोमेन व॥ यंत्रमाह लिखेदिति। विकारको पंषोडशकोष्ठं॥ मंत्रांतरमाह॥ मायेति

चापं पाशांकुशं जसरसिजान्यंकुशं पुष्पबाणान् बिभ्राणां ताकरसरसिजे रत्नमौलिं त्रिनेत्रां॥हेमाब्जाभां कुचभरनतां रत्नमंजीरकांची ग्रैवेयाद्यैर्विलसिततनुं भावयेच्छक्तिमाद्यां॥९६॥ स्वामरादर्शतांबूलकरंडकसमुद्गकान्। वहंतीभिः कुचार्ताभिर्दूतीभिः परिवारितां॥करुणामृतवर्षिण्या पश्यंतीं साधकं दृशा॥भानुलक्षं जपेदेनं मंत्रं तावत्सहस्रकं।९७। बिल्वारग्वधसंभूतैर्मधुराक्तैः समिद्वरैः॥जपापुष्पैश्च जुहुयात्तोषयेद्वसुनागरुं॥९८॥ हृल्लेखाविहिते पीठे पूजयेत्तां विधानतः॥आग्नेयादिषट्कोणेष्वलक्ष्म्याद्याः परिपूजयेत्॥९९॥लक्ष्मीं हेमप्रभां तन्वीं सवराब्जपुणाभयां॥चक्रशंखगदांभोजधरं हेमनिभं हरिं॥१००॥पाशांकुशाभयाभीष्टधरां गौरीं जपारुणां॥मृगटंकाभयाभीष्टधरं स्वर्णनिभं हरं॥१०१॥नीलोत्पलकरां सौम्यां रतिं कांचनसन्निभां॥धृतपाशांकुशेष्वासं पुष्पेषुमरुणं स्मरं॥१०२॥ पूर्ववन्निधियुग्मं तद्यजेदुभयपार्श्वयोः॥वहिरंगानि संपूज्य पूज्याः पत्रेषु मातरः॥१०३॥लोकेशान्वनितारूपानर्चयेत्सौम्यविग्रहान्॥इत्थं यः पूजयेद्देवीं नित्यं भक्तिसमन्वितः॥१०४॥संप्राप्य कवितां दिव्यां प्राप्य लक्ष्मीमनंतरां॥सौभाग्यमतुलं लब्ध्वा विहरेत्सुचिरं भुवि॥१०५॥ पाशांकुशपुटा शक्तिर्भिंटीशो गगनं सदृक्॥परमेश्वरिशब्दांते द्विठांतः प्रणवादिकः॥१०६॥ अस्यारूढामनुः प्रोक्तस्त्रयोदशभिरक्षरैः॥ द्वाभ्यामेकेन चैकेन द्वाभ्यां पंचभिरक्षरैः १०७। द्वाभ्यां मंगानि षट् कुर्यात्ततो देवीं विचिंतयेत्॥ रक्तामम्भाधिरूढां शशधरशकलाबद्धमौलिं त्रिनेत्रां पाशेनाबध्य साध्यां स्मरशरविवशां दक्षिणेना नयन्तीं॥हस्तेनान्येन वेत्रं वरकनकमयं धारयंतीं मनोज्ञां देवीं ध्यायेद्रजस्वं कुचभरनमितां दिव्यहाराभिरामां १०८॥ मायाहृल्लेखापयावतिस्वरूपं॥पावकवल्लभा स्वाहाकारः॥यंत्रांतरमाह॥षडस्रइति॥षट्कोणं लिखित्वा॥तन्मध्ये मायां विलिख्य कोणेष्ववशिष्टवर्णान्वा॥ तच्चेमातृकावर्णैर्वे

॥पद्मावतीयंत्रंप्रशस्तं॥मुखन्यासमाह॥तारमिति॥ॐमसौॐॐः॥इत्यक्षरद्वयंदक्षिणवामनेत्रयोः॥सूर्यमग्निंक्रमेणध्यायन्न्यसेत्॥ठांतंठकारमक्षरम्॥मुखवृ

वाराःलक्षंजपेन्मंत्रमाज्येनांतेजितेन्द्रियः॥दशांशंजुहुयाद्देवींशक्तिपीठेसमर्चयेत्॥१०९॥पाशाद्यक्षरोक्तेनविधानेनसमाहितः
॥आज्याढ्यान्नाहुतान्मंत्रीलभतेवांछितंफलं॥११०॥लवणैर्मधुसंसिक्तैर्होमेनवशयेन्नृपान्॥तेनैवविधिनामंत्रीवशयेद्वनि
तामपि १११ आलिख्यकोष्ठानिविकारसंख्यान्यतस्त्वनुष्केप्रणवंससाध्यं॥अन्येषपिद्वादशमंत्रवर्णाल्लिखेदिदंयंत्रमशेषवश्यं
११२ मायाहृद्भगवत्यंतेमाहेश्वरिपदंवदेत्॥अन्नपूर्णेठयुगलंमनुःसप्तदशाक्षरः ११३ अंगानिमाययाकुर्यात्ततोदेवींविचिंतयेत्।
रक्तांविचित्रवसनांनवचंद्रचूडामन्नप्रदाननिरतांस्तनभारनम्रां॥नृत्यंतमिंदुशकलाभरणंविलोक्यहृष्टांभजेभगवतींभवदुःखहंत्रीं
११४॥यथाविधिजपेन्मंत्रंवसुयुग्मसहस्रकं॥साज्येनान्नेनजुहुयात्तद्दशांशमनंतरं॥११५॥शक्तिपीठेयजेद्देवीमंगलोकेश्वराय
धैः॥प्रातरेनंजपेन्मंत्रंनित्यमष्टोत्तरंशतं॥११६॥एतस्यान्नसमृद्धिःस्यात्श्रियासहमहीयसी॥मायापद्मावतिपदंततःपावक
वल्लभा॥११७॥सप्तार्णोमनुराख्यातःसर्ववश्यप्रदायकः।अंगानिमाययाकुर्याद्ध्यायेत्त्रैलोक्यमोहिनीं ११८ पद्मासनस्थांकर
पंकजाभ्यांरक्तोत्पलेसंदधतींत्रिनेत्रां।आबिभ्रतीमाभरणानिरक्तांपद्मावतींपद्ममुखींभजामि ११९ पक्षलक्षंजपेन्मंत्रंदशां
शंजुहुयाद्घृतैः॥शक्तिपीठेयजेद्देवीमंगाद्यावरणैःसह॥१२०॥किंजल्केष्वंगपूजास्यात्[illegible] प[illegible]मातरः॥लोकपालाबहिः
पूज्याःतदस्त्राणिततोबहिः॥१२१ इत्थंयोभजतेमंत्रंजपहोमार्चनादिभिः॥सुभगःसर्वनारीणांभवेत्कामरवापरः १२२ षडस्रम
ध्येप्रविलिख्यशक्तिंकोणेषुशिष्टानिषडक्षराणि॥तद्बाह्यतोमातृकयाभवीतंपद्मावतीयंत्रमिदंप्रशस्तं॥ १२३ ॥ ॥

॥ ॥



नेन्यसेत॥चंद्रमंडलंध्यात्वारमां विचिंत्य॥श्रीवीजंवक्रेन्यसेत॥हत्तिहृयंविचिंत्यस्वाहा॥इत्यक्षरद्वयंगंडयोर्न्यसेत एवं न्यासकृतेउक्तफलसिद्धिः॥इतिगूढार्थदीपिकायांदशमःपटलः॥अथदुर्गामनून्वक्तुमारभते॥ततोदुर्गामनूनिति॥ मायाहृल्लेखाअग्निर्रेकारः॥कर्णोऊकारः।कर्णउकारः।विंदुरनुस्वारः।दुंइतिसिद्धं।भूयोसोसर्गवान्।उनरपिदु

तारंशिरसिविन्यस्यदेवींसंचिंत्यभारतीं॥शक्तिवीजंन्यसेद्भालेसंस्मृत्यभुवनेश्वरीं १२४ श्र मसोर्नेत्रयोर्न्यस्येत।ध्यात्वासूर्यहुताशनं॥मुखवृत्तेनविन्यस्येद्दांतेचंद्रमनुस्मरन् १२५ नि ह्वायांविन्यसेद्दीजंरमायास्तांविचिंतयन्॥स्वाहार्णौगंडयोर्न्यस्येत्तन्नजेन्द्रधियासुधीः १२६ अमुंन्यासमाख्यातंकुर्वन्प्रतिदिनंनरः॥कीर्तिश्रीकांतिमेधानांवल्लभोभवतिध्रुवम् १२७ इति श्रीशारदातिलकेदशमःपटलः॥१०॥ततोदुर्गामनुंवक्ष्येदृष्टादृष्टफलप्रदम्॥मायानिःकर्ण विंद्वाढ्योभूयोसोसर्गवान्भवेत् १ पंचांतकःप्रतिष्ठावान्मारुतोभौतिकासनः॥ तारादिहृद यांतोयंमंत्रोवस्वक्षरात्मकः २ ऋषिश्चनारदश्छंदोगायत्रंदेवतामनोः॥दुर्गासमीरितासद्भि र्दुरितापन्निवारिणी ३ नमस्कारवियुक्तेनमूलमंत्रेणसाधकः॥ह्रामाद्यैःसहकुर्वीतषडंगानि यथाविधि॥४॥




| | | | |
|---|---|---|---|
| श्रीं | ह्रीं | क्लीं | ए |
| हा | | | हि |
| सा | ॐ सौ. | | य |
| रि | ष्य | मे | र |

इतिभवति।पंचांतकोगकारः॥प्रतिष्ठावान्दीर्घउकारः।गाइतिभवति।मारुतोभौतिकासनः। मारुतःयकारः।भौतिकःऐकारः।त्वाघवानयेइतिभवति।तारादिःप्रणवादिः।हृदयांतःनमोंतः।तेनॐह्रींदुंदुर्गायैनमः इति वस्वक्षरः।अष्टाक्षरोमंत्रः॥षडक्षरैः॥अइउएभिःनपुंसकैश्चरहितैः॥आईऊएऐओऔअंअः इतिप्रत्येकंशक्तिवि

॥ अभिषेकप्रकारं वक्तुमारभते ॥ प्रतिष्ठेत्यादिना ॥ अभिषेकफलमाह ॥ राज्येत्यादिना ॥ यंत्रस्वरूपप्रकारमाह ॥ मध्ये तारमिति ॥ अष्टदलपद्ममध्ये प्रणवं तन्मध्ये
शक्तिबीजं तन्मध्ये साध्याख्यां तदंतर्मध्ये वर्णं विलिख्य जातवेदो मंत्रेणावेष्टयित्वा ॥ पश्चान्मातृकावर्णैश्च भूगृहेणावेष्टितं विदध्यात् ॥ उक्तफलप्रदं ॥ मंत्रांतर

सिंहस्था शशिशेखरा मरकतप्रख्यैश्चतुर्भिर्भुजैः ॥ शंखं चक्रधनुःशरांश्च दधती नेत्रैस्त्रिभिः शोभिता ॥ आमुक्तांगदहारकंकणरण
त्कांचीरणन्नूपुरा दुर्गा दुर्गतिहारिणी भवतु वो रत्नोल्लसत्कुंडला ५ वसुलक्षं जपेन्मंत्रं तिलैर्मधुरलोलितैः ॥ पयोंभसावाजुहुया
त्तत्सहस्रं जितेंद्रियः ६ पीठमित्थं यजेत्सम्यक् नवशक्तिसमन्विते ॥ प्रभा माया जया सूक्ष्मा विशुद्धा नंदिनी पुनः ७ सुप्रभा विजया स
र्वसिद्धिदा नव शक्तयः ॥ अग्निमूर्हस्वनयन्नीवरहितैः पूजयेदिमाः ॥ ८ प्रणवानंतरं वज्रनखदंष्ट्रायुधाय च ॥ महासिंहाय वर्मांतेन
तिः सिंहमनुर्मतः ९ दद्यादासनमेतेन मूर्तिं मूलेन कल्पयेत् । तस्यां संपूजयेन्मूर्तौ देवीमावाह्य मंत्रवित् १० अंगावृतिं पुराभ्यर्च्य श
क्तीः पत्रेषु पूजयेत् ॥ जया च विजया कीर्तिः प्रीतिः पश्चात्प्रभा पुनः ११ श्रद्धा मेधा श्रुतिः प्रोक्ता स्वनामाद्यक्षरादिकाः । पत्राग्रेष्वर्चये
दष्टावायुधानि यथाक्रमात् १२ चक्रशंखगदाखड्गपाशांकुशशराध्वजाः ॥ लोकेश्वरांस्ततो बाह्ये तेषामस्त्राण्यनंतरं १३ इत्थं जया
भिर्मंत्री मंत्रे सिद्धे विधानवित् । कुर्यात्प्रयोगानेतेन मनुना स्वमनीषितान् ॥ १४ ॥ प्रतिष्ठाप्य विधानेन कलशान्नवशोभनान् । रत्नहेमा
दिसंयुक्तान्पदेषु नवसु स्थितान् १५ मध्यस्थे पूजयेद्देवीमितरेषु जयादिकाः ॥ संपूज्य गंधपुष्पाद्यैरभिषिंचेन्नराधिपं १६ राजा विजय
ते शत्रून्योधको विजयश्रियम् प्राप्नोति रोगी दीर्घायुः सर्वव्याधिविवर्जितः ॥ वंध्याभिषिक्ता विधिना लभते तनयं वरं । मंत्रेणानेन सं
जप्तमाज्यस्तु दुर्ज्वरापहं १८ गर्भिणीनां विशेषेण जन्मभस्मादिकं तथा ॥ मध्ये तारं बीजमतः स साध्यं पत्रेष्वष्टौ मंत्रवर्णान्विलिख्य १९

माह मांतः मकारः वियत् हकारः सनयनं इकारयुक्तः हिं इति सिद्धं शांतः षकारः ॥ मर्दिनि स्वरूपं ठद्वयं स्वाहाकारः ॥ एवमष्टाक्षरो दुर्गामंत्रः ॥ ध्यानमाह गारुडेति ॥ दीर्घस्व
रैः आ ई ऊ ऐ औ अः इत्यादिभिः पंचकायनमः ॥ शंखायनमः ॥ इत्यादिप्रकारेण शेषं निगदव्याख्यातम् ॥ मंत्रांतरमुद्धरति ॥ तारो दुर्गेति ॥ तारः प्रणवः प्रसिद्धः ॥ दुर्गायुगं स

शा॰ति॰
टी॰गू॰
४८

त्रिष्टुप्वीतंवेष्टितंमातृकार्णैर्यंत्रंदीर्गेभूपुरस्थंविदध्यात्॥क्षुद्रभूतमहारोगचौरसर्पनिवारणं॥ २० विजयश्रीप्रदंसौभाग्यगर्भिणीनांसुख
प्रदं॥भ्रांतविपत्सनपनंस्वेतोमर्द्दिनिठह्वये २१ अष्टाक्षरीयमाख्याताविद्यामहिषमर्द्दिनी॥महिषहिंसिकेहुंफट्हृदयंपरिकीर्तितम्॥२२॥
महिषशत्रोशाङ्कींहुंफट्शिरोंगंसमुदाहृतम्॥महिषंभीषयद्वंद्वंहुंफडंतःशिखामनुः॥२३॥महिषंहनयुग्मंतेदेविहुंफट्तनुछदं॥महिषा
तेसुदिनीहुंफट्ंतमस्त्रमीरितं २४ मंत्रैरेतैर्जातियुक्तैःपंचांगानिप्रकल्पयेत्॥गारुडोपलसन्निभांमणिमौलिकुंडलमंडितां॥नौमिभाल
विलोचनांमहिषोत्तमांगनिषेदुषीं॥चक्रशंखकृपाणखेटकबाणकार्मुकशूलकांस्तर्जनीमपिविभ्रतींनिजबाहुभिःशशिशेखरां २६
अष्टलक्षंजपेन्मंत्रंतत्सहस्रंतिलैःशुभैः॥हुत्वाप्रागीरितेपीठेयजेन्महिषमर्द्दिनीं॥२७॥संपूज्यांगानिपत्रेषुदुर्गांख्यांवरवर्णिनीं॥आ
र्यांहृयांतृतीयांचचतुर्थींकनकप्रभां॥२८॥पंचमींकृत्तिकासंज्ञांषष्ठीमप्यभयप्रदां॥कन्यांसुरूपांप्रभजेन्मंत्रीदीर्घस्वरैःक्रमात् २९ य
जेदग्रेप्यायुधानिचक्रशंखासिखेटकान्॥बाणंबाणासनंशूलंकपालंपादिभिःक्रमात् ३० लोकपालाःपुनःपूज्यास्तदस्त्राणिततःपरं
वशयेत्तिलहोमेननरान्नरपतीनपि ३१ सिद्धार्थैर्जुहुयान्मंत्रीरोगान्मुच्येततत्क्षणात्॥पयैर्हुत्वाजयेन्मृत्युंदूर्वाभिःशांतिमाप्नुयात्॥
३२॥पलाशकुसुमैःपुष्टिर्धान्यैर्धान्यश्रियंव्रजेत्॥काकपक्षैःकृतोहोमोद्वेषंवितनुतेनृणां॥३३ मरीचहोमान्मरणंरिपुराप्नोतिसर्वथा॥
क्षुद्रादिचोरभूताद्यान्ध्यात्वादेवींविनाशयेत् ३४ तारोदुर्गेयुगंरक्तमत्यंढांतंसलोचनं॥द्विठांताजयदुर्गेयंविद्यावेदाद्दशाक्षरी ३५ तारा
दिदुर्गेहृदयंदुर्गेशिरउदाहृतं॥दुर्गायैस्याच्छिखावर्मभूतरक्षिणिकीर्तितं ३६ तारादिदुर्गेयुगलंरक्षिण्यस्त्रंसमीरितं॥कालाभ्राभांकटाक्षैर
रिकुलभयदांमौलिबद्धेंदुरेखां॥शंखंचक्रंकृपाणंत्रिशिखमपिकरैरुद्वहंतींत्रिनेत्रां॥सिंहस्कंधाधिरूढांत्रिभुवनमखिलंतेजसापूर
यंतीं॥ध्यायेद्दुर्गांजयाख्यांत्रिदशपरिवृतांसेवितांसिद्धिकामैः ३७ वाणलक्षंजपेन्मंत्रंघृतेनजुहुयात्ततः दशांशंसंस्कृतेवह्नौब्राह्मणानपिभो

राम॰
४८

अंगमंत्रानाह॥ ज्वलज्वल इति स्वरूपं॥ शूलिनिपदंच दुष्टग्रह इत्यपि हुं स्वरूपं। अस्त्रं फट्। वह्निजाया स्वाहाकारः। अंगान्याह॥ दुर्गेति। अयंभावः ज्वलिनि दुं हुं फट्

अष्टाक्षरोदिते पीठे पूजयेत्पूर्ववत्सुधीः॥ मंत्रं जपन्विशेषाद्युद्धे शत्रून्हन्याद्विशेषतः ४० प्रजपेद्व्यवहारादौ तत्रापि विजयी भवेत् अर्चये
द्दशशस्त्राणि जपार्थी विद्ययानया ४१ ज्वलज्वलपदांते स्याच्छूलिनीति पदं वदेत्॥ दुष्टग्रह हुं मस्त्रांते वह्निजायावधिर्मनुः ४२
भूतेन्द्रियाक्षरः प्रोक्तो ग्रहक्षुद्रारिनाशकः॥ ऋषिर्दीर्घतमः प्रोक्तः ककुप्छंद उदाहृतं ४३ शूलिनी देवता प्रोक्ता समस्तसुरवंदिता
दुर्गे हह रदे शीर्षं विंध्यवासिनि तच्छिखा ४४॥ असुरांते मर्दिनि स्याद्युद्धपूर्वे प्रिये पुनः॥ त्रासय द्वितयं वर्म देवसिद्धसुपूजिते ४५
नंदिनी स्याद्रक्षयुगं महायोगेश्वरि क्रमात्॥ शूलिन्याद्या हुं फडंताः पंचांगमनवः स्मृताः ४६ अथ्यारूढां मृगेंद्रं सजलजलधर
श्यामलां हस्तपद्मैः शूलं बाणं कृपाणामरिजलजगदाचापपाशान्वहंतीं चंद्रोत्तंसां त्रिनेत्रां चतसृभिरसिनाखेटकान् बिभ्रतीभिः क
न्याभिः सेव्यमानां प्रतिभटभयदां शूलिनीं भावयामि ४७ मनुमेनं जपेन्मंत्री वर्णलक्षं विचक्षणः सर्पिषान्नेन होमस्तु तद्दशांशमि
तो भवेत् ४८ प्रागुक्ते पूजयेत्पीठे वक्ष्यमाणेन वर्त्मना॥ विधाय पूजामंगानां पूज्याः पत्रेषु शक्तयः ४९ दुर्गाद्या वरदा विंध्यवासि
न्यसुरमर्दिनी युद्धप्रिया पंचमी स्याद्देवसिद्धसुपूजिता ५० सप्तमी नंदिनी प्रोक्ता महायोगेश्वरी परा दलाग्रेषु तदस्त्राणि शं
खचक्रमसिं पुनः ५१ गदेषुचापशूलानि पाशपद्मादि शाधिपान्॥ इत्थं जपादिभिः सिद्धः कुर्यात्कर्म निजेप्सितं ५२ अष्टोतर
सहस्रं यस्तिलैस्त्रिमधुराप्लुतैः॥ नित्यं प्रजुहुयात्तस्य शांतिः स्यादतिमानुषी ५४ अष्टोत्तरशतं नित्यं सर्पिषा जुहुयान्नरः॥ वांछितं व
त्सराद्वीक्प्राप्नुयान्महतीं श्रियम्॥ ५४॥ ॥ हृदयं ज्वलिनि वरदे हुं फट्। शिरः ज्वलिनि विंध्यवासिनि हुं फट्। शिखेत्यादिप्रकारेण षडंगानि कुर्या
र्यादिति॥ अरिश्च जलजः शंखः। मंत्रांतरमुद्धरति॥ उतिषेत्यादिना स्पष्टार्थेन ग्रंथेन पितामहः ककारः। सनेत्रेंदुः इकारान स्वारयुतः। किं इति भव

प्रत्येकमेकैकांतरस्थानान्याह॥ पादाद्येत्यादिना। आधारः लिंगगुदांतरालः मंत्रंषोढा विभज्य वह्निपदैः षडंगन्यासः कर्तव्यः। षड्भिरित्यादिना ध्यानमाह॥
सौवर्णइति॥ करोटीनृकपालः। अहिभुजामष्टभुजां। सशृंगैः सायकैः शरानुवदिएन· बाणान्संपातयेत्· होमशेषाज्येनासिंचनात्कुडवंप्रस्थं। गूढः प्रछन्न
दूर्वाहोमो भवेन्नृणां सर्ववांछितसिद्धिदः॥ छुरिकाद्यानि शस्त्राणि जप्तानि मनुनामुना ५५ संपाताज्यविलिप्तानि वितरंति जयश्रियं
अश्वत्थार्कसमिद्भिर्वा तिलैर्वा मधुरोक्षितैः ५६ होमो वशयति क्षिप्रमीप्सितान्मंत्रिणो नरान् उद्यदायुधहस्तां तां देवीं कालघनप्रभां॥
।५७। ध्यात्वात्मानं जयेन्मंत्रे स्पृष्ट्वा यं मुंचति ग्रहः। सर्पाखुवृश्चिकादीनां विषमाशु विनश्यति ५८ मनुनानेन विधिवन्मंत्रविद्देवता
धिया मंत्रेणानेन संजप्तान्बाणानादाय साधकः ५९ विमुंचेत्प्रतिसेनायां सा द्रुतं विद्रुता भवेत् शूलपाशधरां देवीं ध्यात्वात्मानमनाकु
लः प्रविशेद्युद्धदेशं यो जित्वा याति स निर्व्रणः॥ जुहुयात्तिलसिद्धार्थैर्लक्षमेकं यथाविधि ६१ नामयुक्तं जपेन्मंत्रं यस्यासौ मृत्युमेष्य
ति। गुटिकां गोमयोत्पन्नां हुत्वाष्टशतसंख्यया॥ ६२॥ समाहात्कुरुते मंत्री विद्वेषं स्निग्धयोर्मिथः। गृहीत्वा गोमयं व्योम्नि त्रिसहस्रं ज
पेत्ततः ६३ गमिष्यतो द्वारदेशे निखातं स्तंभनं भवेत् बहुनोक्तेन किं सर्वं साधयेन्मनुनामुना। ६४। उत्तिष्ठपदमाभाष्य पुरुषि स्वा
त्पदं ततः॥ पितामहः सनेत्रेंदुः स्वपिषि स्याद्भयं च मे ॥६५॥ समुपस्थितमुच्चार्य यदि शक्यमनंतरं॥ अशक्यं वा पुनस्तन्मे वदेद्भगव
तिं ततः ६६ शमयाग्निवधूसप्तत्रिंशद्वर्णात्मको मनुः॥ ऋषिरारण्यकश्छंदोऽप्रत्यनुष्टुबुदाहृतं ६७ देवतानचदुर्गास्यात्सर्वदुर्गवि
मोचनी पादाष्टसंधिषु गुदलिंगाधारोदरेषु च ६८ पार्श्वहृत्स्तनकंठेषु पुनर्बाहुष्टसंधिषु॥ मुखनासाकपोलाक्षिकर्णभ्रूमध्यमू
र्द्धसु ६९ मंत्राक्षराणि विन्यस्य देवताभावसिद्धये षड्भिस्त्रिभिरष्टाभिरष्टाभिः षड्भिरिन्द्रियैः ७० मंत्रार्णैरंगक्लृप्तिः स्याज्जातियुक्तैर्य
थाक्रमं॥ सौवर्णांबुजमध्यगां त्रिनयनां सौदामिनीसन्निभां चक्रं शंखवराभयानि दधतीमिंदोः कलां बिभ्रतीं। ग्रैवेयांगदहारकुंडलधरा
माखंडलाद्यैः स्तुतां ध्यायेद्विंध्यनिवासिनीं शशिमुखीं पार्श्वस्थपंचाननाम् ७१॥ कारस्करः विषवृक्षः· अभ्रमांषापांनिर्गुंडी। भाषांतरे कोकिला

एवंध्यात्वाजपेल्लक्षंचतुष्कंतद्दशांशतः॥जुहुयाद्द्विजामंत्रीशालिभिःसर्पिषातिलैः ७२ प्रागीरितेयजेत्पीठेदेवीमंगादिभिःसह॥अंग
पूजायथापूर्वंदलमूलेष्विमायजेत्॥७३॥आर्यादुर्गाचभद्राख्याभद्रकालीततोंबिका॥क्षेमान्यावेदगर्भाख्याक्षेमंकर्यष्टशक्तयः ७४ अस्त्राणि
पत्रमध्येषुशंखचक्रासिखेटकान्॥बाणकोदंडशूलानिकपालंतानिपूजयेत् ७५ ब्राह्म्याद्याःसुरेशाग्रेषुलोकपालास्ततःपरं॥सिद्धमंत्र
प्रयोगेषुदेवीमित्थंविचिंतयेत् ७६ कालपावकसन्निभांकलितार्द्धचंद्रशिरोरुहां भालनेत्रविभूषणांभयदापिसिंहनिषेदुषीं॥ चक्र
शंखकृपाणखेटकचापबाणकरोटिकां शूलवाहिभुजांभजेविजिताखिलासुरसैनिकां॥७७॥प्रातःस्नानरतोनित्यमष्टोत्तरसहस्रकं
जपेत्तस्याशुसिद्ध्यंतिधनधान्यादिसंपदः ७८ अनेनैवविधानेनग्रहक्षुद्रारिपूञ्जयेत्॥नाभिमात्रोदकेस्थित्वादेवीमर्कगतांस्मरेत् ७९ ज
पेदष्टोत्तरशतंलभतेमहतींश्रियं॥अश्वत्थवटवृक्षोत्थैःसमिद्भिरर्चितेनले ८० होमंसमिद्वरैःकुर्यान्नाशयत्यापदांकुलं॥घोराभिचारसंभूता
रीन्शमयेद्विधिनामुना ८१ अपामार्गसमिद्भिर्वातिलैर्वाकाननोद्भवैः॥सर्षपैर्वाकृतोहोमःक्षुद्रापस्मारनाशनः ८२ अभीष्टसिध्यैजुहु
यादर्कैर्मंत्रीसमिद्वरैः॥सहस्रमर्कवारादिदिवसान्दशसंख्यतः॥८३॥शरान्क्षुद्रान्समादायशकलान्मंत्रनामुना॥जुहुयाद्वर्धितेवह्नौस
प्ताहमतंद्रितः ८४ साधयेदखिलंशत्रुमभीष्टंमंत्रवित्तमः॥कुसुमैर्वशयेद्धीमान्नृपतीन्पद्महोमतः॥८५॥तत्पत्नीरुत्पलैःफुल्लैर्वैश्यांकह्ला
रहोमतः॥शूद्राँल्लवणहोमेनजातीपुष्पैःशुभांपुनः ८६ व्रीहिभिर्जुहुयान्नित्यंवत्सराद्व्रीहिमान्भवेत्॥दूर्वाहोमेनदीर्घायुर्मधुना
रत्नवान्भवेत् ८७ अन्नैरन्नसमृद्धिःस्याद्राज्येनलभतेधनं गोदुग्धेनगवांवृद्धिमाप्नुयान्नात्रसंशयः ८८ ज्वरेग्रहेगरेसर्पेतर्जन्या
संस्पृशञ्जपेत् स्पृष्ट्वाशूलकरांदेवींतत्क्षणाद्देवतान्हरेत् ८९ रभितंसाध्यनामार्णैःपत्रैर्मंत्रमिमंलिखेत्॥कुलालमृत्कृतापांचप्रति
मायांहृदिन्यसेत्॥९०॥कृतप्राणप्रतिष्ठांतांपूजितांकुसुमादिभिः॥ निधायाग्रेजपेन्मंत्रमष्टोत्तरसहस्रकम् ॥ ९१॥ ॥

संध्यासुपक्षमात्रेणवशमायातिवांछितः॥ अभ्यर्च्यदेवीमनलेतीक्ष्णतैलेनमंत्रवित् ९२ हुत्वायुतंनिधायाग्रेतीक्ष्णांस्त्रिंशच्छुरांपुनः
तेषुसंपातयेद्रूपःस्पृष्ट्वातान्नियुतंजपेत् ९३ वेधयेत्परसेनायांस्मरणान्नष्टादिशोदश॥ प्राप्नुयान्नष्टसंज्ञासापलायनपरायणा ९४
जपित्वासितगंजानांकुडवंकुलिकोदये। विकिरेच्छत्रुसेनायांगूढःसन्तापणादिषु ९५ ज्वरमारीमहारोगैःपीडितासैन्यनायकैः।पर
स्परविरोधन नश्येद्गच्छेन्म्रियेतसा ९६ सेनायांस्तंभनंमंत्रीकारस्करसमुद्भवैः॥पुष्पैःसहस्रंजुहुयात्तत्रैस्तांनिवर्तयेत्। अङ्गार
वारेकुलिकेजन्तुंभस्माविताद्भवं॥ विनिःक्षिपेद्रिपोर्मूर्द्धिविद्विष्टोदेशतोव्रजेत् ९८ मरुन्निपातितैःपत्रैःकारस्करसमुद्भवैःतस्य
पादरजोयुतैर्होमादुच्चाटयेदरीन् ९९ कारस्करमयींकृत्वाप्रतिमांचसुशोभनां जप्तांप्रतिष्ठितप्राणांछेदयेदंगशःपुनः १०० काको
लूकवसायुक्तामष्टोत्तरसहस्रकं क्षिपेत्संचतुर्दश्यांश्मशानेहव्यवाहने १०१ जुहुयान्म्रियतेरातिरेवमेवदिनत्रयात्॥उन्मत्तस
मिधैर्होमान्मत्ताःस्युःशत्रवःस्मरणात् १०२ उलूककाकयोःपक्षैःस्ववसारक्तसंयुतैः जुहुयान्निशिकांतारेशत्रुःकालातिथिर्भवेत्॥१०३
शत्रोःप्रतिकृतिंमंत्रीप्रतिष्ठितसमीरणां विशोषकविलिप्तांगीमत्सुष्मेनिक्षिपेज्जले १०४ ज्वराक्रांतोभवेच्छीघ्रंदुग्धसेकाच्छमंनयेत्
तर्जनींत्रिशिखंदोर्भ्यांधारयंतींभयंकरीं १०५ रक्तांध्यात्वारवेर्बिंबेप्रजपेदयुतंमनुं मारयेदचिरादेवरिपून्बंधुसमन्वितान् १०६ खड्ग
खेटकसंकुद्धांसन्नद्धांभानुमण्डले ध्यात्वामंत्रंजपेन्मंत्रीनाशयेद्विरादरीन् १०७ चापबाणधरांभीमांसिंहस्थांज्वलनोपमां॥ स्रजंतीं
बाणनिवहान्धावन्तींतादृशंरिपुं १०८ ध्यात्वाजपेन्मनुमिममयुतंतोयमध्यगः॥रिपुंचपरसेनांचद्रुतमुच्चाटयेद्ध्रुवं १०९ आनित्य
कसमिद्धोमान्मुच्यतेरोगशोकतः॥पुष्पैस्तदीयैर्वशयेन्मधुराक्तैर्मत्तगजान् ११० रक्षायैपंचगव्येनलिंपेज्जप्तेनदंतिनः गव्याज्यति
लसिद्धार्थैरानित्यकसमिद्वरैः १११ दुग्धान्नपंचगव्याभ्यांतंडुलेनघृतेनच॥ एतैःपृथक्पृथक्द्रव्यैरष्टोत्तरसहस्रकं ११२ जुहुयाद्दि
नशोविप्रान्भोजयेन्मधुरादिभिः गुरवेदक्षिणांदद्याद्वस्त्राभरणसंयुतां ११३ मातंगाश्चतुरंगाश्चवर्द्धंतेविधिनामुना सर्वव्याधिविनिर्मुक्ताः
क्षुद्रपीडाविवर्जिताः ११४॥

तस्य शत्रोः स्ववसा काकोलूकवसा॥ तादृशं वाधावंतं॥ अनित्यसमिधं। कारस्कारसमिधं॥ आदित्यकं समिधमिति पाठे। अथ यामार्गतात् दुर्गात्॥ यंत्रमाह॥
मर्दिनी महिषमर्दिनी॥ महिषमर्दिन्यंतराणि॥ अष्टपत्रेषु मूलमंत्रांतराणि गराशो लिखेत्॥ गराशस्त्रीणि त्रीणि द्वादशासु लिखेत्॥ अंत्यमंत्यपत्रे लिखेत्॥ पद्माद

कारयेद्ध्रस्वरक्षेण शिल्पिनायुधपंचकं॥ शंखखङ्गरथांगानि शार्ङ्गं कौमोदकीं क्रमात् ११५ पंचगव्येषु निःक्षिप्य तानि स्पृष्ट्वा मनुं जये
त्॥ सम्यक् पंचसहस्राणि तेषु संपातयेत्पुनः ११६ तावदाज्येन जुहुयान्मंत्रैः स्वैः पूजयेत्क्रमात्॥ उद्धृत्य पंचगव्येभ्यः पूर्ववत्प्रजपेन्म
नुं ११७ अथ यान्यं च निखनेद्दिक्षु मध्यादिषु क्रमात्॥ अथ टेषेषु पूर्णेषु पंचगव्येन साधकः ११८ आयुधानि प्रजप्तानि पंच घोषपुरः
सरं॥ विन्यसेत्तेषु मध्यादि पूजां कुर्याद्यथापुरः ११९ वालुकाभिः समापूर्य मृद्भिः कुर्यात्समं स्थलं॥ वलिं च विकिरेत्तत्र तेषां मंत्रैर्यथाक्र
मं १२० ॥ दिक्पतिभ्यो वलिं दत्वा ब्राह्मणान्भोजयेत्ततः॥ दीनांधकृपणादींश्च तोषयेद्भोजनादिभिः १२१ गुरवे दक्षिणां दद्याद्दात्मवि
त्तानुसारतः॥ यत्रैवं विहिता रक्षा देशे वा नगरे पुरे १२२ ग्रामे गेहे थवा तत्र वर्द्धंते संपदः सदा॥ अपमृत्यादयो दोषा भूतप्रेतादिसं
युताः १२३ अभिचारकृताः कृत्यारिपुचोराद्युपद्रवाः॥ नेक्ष्यंते तां दिशं भीतास्तर्जिता देवताज्ञया १२४ पद्मं भानुदलान्वितं प्रविलि
खेत्तत्कर्णिकायां पुनस्तारं शक्तिगवीजसाध्यसहितं तत्केसरेषु क्रमात्॥ मर्दिन्या मनुसंभवान्युगलशो वर्णांस्तुनः पत्रगान्मंत्रा
र्णांन्गुणाशो विधाय निलिखेदंत्यं तदंत्ये दले १२५ मातृकावर्णसंवीतं भूपुरद्वयमध्यगं। यंत्रं विंध्यनिवासिन्याः प्रोक्तं सर्वसमृद्धि
दं १२६ रक्षाकरं विशेषेणाग्न्युन्द्भूतादिनाशनम् राज्यदं भ्रष्टराज्यानां वश्यदं वश्यमिच्छतां १२७ सुतार्थिनीनां सुतदं रोगिणां
रोगशांतिदं ,वहुना किमिहोक्तेन यंत्रं तत्कामदोमणिः ॥ १२८ ॥ इति शारदातिलके एकादशः पटलः ११ ॥ ० ॥

हिर्मातृकावर्णान् तद्बहिः क्षोणीपुरद्वयं एतद्यंत्रमुक्तफलदं॥ इति गूढार्थदीपिकायामेकादशः पटलः ११ ॥ समाप्तः ॥ • ॥ ॥

दौर्गान्मंत्रान्यथावदभिधायाऽधुनात्रैपुरंवक्तुमारभते॥ अथेत्यादिना॥ वियद्धकारः। भृगुःसकारः। हुताशनःरेफः। भौतिकःऐकारः। विंदुःअनुस्वारः। एतैःसपिंडितंप्रथमंबीजंपुनर्वियत्॥ तदादिःसकारः। कस्वरूपा इंद्रःलकारः। अग्निरेफः। वामाक्षि ईकारः विंदुसहितः। एतैःसपिंडितंद्वितीयं। आकाशोहकारः। भृगुःसकारः। वह्निःरेफः। मनुःऔकारः। इंदुखंडोविंदुः। एतैःसपिंडितंतृतीयं॥ बीजानांसंज्ञावाग्भवमित्यादिन्यासस्थानान्याह॥ नाभेरित्यादिना॥ शंखयोःकंठपार्श्वयोः। न

अज्ञानतिमिरध्वंसिसंसारार्णवतारकं॥ आनंदबीजमवतादतर्क्यंत्रैपुरंमहः १ अथवक्ष्येपरांविद्यांत्रिपुरांमतिगोपितां॥ यां ज्ञात्वासिद्धसंघानामधिपोजायतेनरः २ वियद्भृगुहुताशस्थोभौतिकोविंदुशेखरः वियत्तदादिकेंद्राग्निस्थितंवामाक्षिविंदुमत् ३ आकाशभृगुवह्निस्थोमनुःसर्गेंदुखंडवान् वाग्भवंप्रथमंबीजंकामंबीजंद्वितीयकं ४ तृतीयंकामराजाख्यंत्रिभिर्बीजैरितीरिता पंचकूटात्मिकाविद्यावेद्यात्रिपुरभैरवी ५ ऋषिःस्याद्दक्षिणामूर्तिश्छंदःपंक्तिःसमीरितं। देवतादेशिकैरुक्तादेवीत्रिपुरभैरवी॥ ६॥ नाभेराचरणांन्यस्येद्वाग्भवंमंत्रवित्पुनः॥ हृदयान्नाभिपर्यंतंकामबीजंप्रविन्यसेत्। शिरसोहृत्प्रदेशांतंतार्तीयंविन्यसेत्ततः। आद्यंद्वितीयंकरयोस्तार्तीयमुभयोर्न्यसेत् ८ मूर्धाधारेहृदिन्यस्येद्भूयोबीजत्रयंक्रमात् नवयोन्यात्मकंन्यासंकुर्याद्बीजैस्त्रिभिःपुनः ९ कर्णयोश्चिबुकेभूयःशंखयोर्वदनेपुनः। नेत्रयोर्नसिविन्यस्येदंसयोर्जठरेपुनः १० ततःकूर्परयोःकुक्षौजानुनोर्ध्वजमूर्द्धनि पादयोर्गुह्यदेशेचपार्श्वयोर्हृदयांबुजे ११ स्तनयोःकंठदेशेचरत्यादिमथविन्यसेत्॥ मूलेरतींहृदिप्रीतिंभ्रुवोर्मध्येमनोभुवां॥१२॥

सिनासिकायांपिठरेउदरे कौर्परयोः। बाहुमध्यपृष्ठभागयोः। ध्वजमूर्धनि॥ अनन्तरंरत्यादिन्यासस्थानान्याह॥ मूलेति॥ बालात्रिपुराबीजन्यासमाह। बालेति॥ एवंपूर्वोक्तेषु। एष्वेवमूलेशीत्यादिना। तथैवईशानादिमूर्तिन्यासस्थानानिनिरूप्यंतेमूर्ध्नीत्यादिना॥ कथंईईशानायमनोभवसहितायनमः॥ तत्पुरुषायमकरध्वजसहितायनमः॥ इत्यादिप्रकारेण ऊर्ध्वादिमुखेष्वपितानेवतथैवयथाक्रमंन्यसेदित्याह॥

ऊर्ध्वेति। भृगुः सकारः। व्योम हकारः। अग्निः रेफः। सद्यः ओकारः। तदादि ऐकारः। प्रतिलोमेन पंचह्रस्वस्वरसमन्वितां एषां मूर्तीनां बीजं ततश्च सकारहकाररेफऔ
कारह्स्रौं ह्स्रें ह्स्रुं ह्स्रिं ह्स्रं॥ एवं प्रयोगः॥ प्रधानमंत्रबीजत्रयमध्ये। आद्यबीजत्रयमध्ये। आद्यबीजेन दीर्घभाजा अंगक्रियेत्याह। षडिति। सर्गान्तेति। विसर्गयुक्तं सका
रसहितानीति॥ सुभगादिशक्तीनां न्यासस्थानान्याह॥ भालइति॥ लंबिकाघंटिका। अधिष्ठानं। लिंगाधारं पंचताराः एवं निरूप्यंते॥ वागिति॥ वाग्बीजं ऐमिति। ऐं
वालाबीजैस्त्रिभिर्न्यस्येत्स्थानेष्वेषु विलोमतः॥ अमृतेशोच योगेशो विश्वयोनिः क्रमादिमाः १३ विलोमबीजैर्विन्यस्येन्मूर्तिन्यासम
याचरेत्॥ स्वस्वबीजादिकं पूर्वं मूर्ध्नीशानमनोभवं १४ न्यसेद्वक्त्रे तत्पुरुषं मकरध्वजमात्मवित्॥ हृद्यघोरकुमारादिकंदर्पं तदनंत
रं १५ गुह्यदेशे प्रविन्यस्येद्वामदेवादिमन्मथं। सद्योजातं कामदेवं पादयोर्विन्यसेत्ततः १६ ऊर्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु मुखेषु ता
न् प्रविन्यसेद्यथा पूर्वं भृगुव्योमाग्निसंस्थितः॥१७॥ सद्यादिपंचह्रस्वस्थो बीजमेषां प्रकीर्तितं॥ षड्दीर्घयुक्तेनाद्येन बीजेनांगक्रिया
मता १८ पंचबाणान्स्तनौ न्यस्येन्मंत्री त्रैलोक्यमोहनान्॥ द्रामाद्यां द्राविणीं मूर्ध्नि द्रीं ड्व्यां क्षोभिणीं पदे १९ क्लीं वशीकरिणीं वक्त्रे गु
ह्ये ब्लूंबीजपूर्विकाम् आकर्षिणीं हृदि पुनः सर्गान्तं भृगुसंयुतम् संमोहनीं क्रमादेवं बाणन्यासोयमीरितः॥ भालभ्रूमध्यवदनलंबि
काकंठहृत्सु च २१ नाभ्यधिष्ठानयोः पंचताराद्याः सुभगादिकाः॥ न्यस्तव्या विधिना देव्यो मंत्रिणा सुभगा भगा २२ भगसर्पिण्यथ
पराभगमालिन्यनंतरं॥ अनंगानंगकुसुमा भूयश्चानंगमेखला २३ अनंगमदना सर्वा मदविभ्रममंथरा ।प्रधानदेवतावर्णा भूषणा
द्यैरलंकृताः २४॥ अक्षस्रक्पुस्तकाभीतिवरदाढ्यकरांबुजाः॥ वाक्कामब्लूंपनस्त्रींसंस्ताराः पंचोदितास्त्वमी॥ न्यासं कुर्याद्भूषणा
ख्यं ततः साधकसत्तमः न्यसेच्छिरसि भालभ्रूकर्णाक्षियुगले नसि २६ गंडयोरोष्ठयोर्दंतपंक्त्योरास्ये न्यसेत्स्वरान्। चिबुकेथगलेकं
ठेपार्श्वयोस्तनयुग्मके ॥ २७ ॥ क्लीं ब्लूं स्त्रीं सः॥ अमी पंचताराः॥ भूषणन्यासे षोडशस्वरन्यासस्थानान्याह॥ न्यसेदित्यादिना॥ ककारादिरकारपर्यंतं सप्तविं
शत्यक्षरन्यासस्थानानि कथ्यंते॥ चिबुकेत्यादिना॥ चिबुके पूर्वस्थानं॥ तत्र स्तनयुग्मे एकः॥ पाणिपृष्ठे प्राच्यां। उक्तस्थानेषु अष्टसु यथाक्रमं वलशषसहान्। शा

कांच्यादीत्यादिना॥कांचीकट्याभरणं॥ग्रैवेयकंकंठभूषणं।कटकंबाहुभूषणं॥मौलिः शिरोभूषणं ध्यानमाह॥उद्यदिति जपवटीं जपमालां विद्यापुस्तकमात
त्वलक्षं॥पीठमंत्रमुद्धरति वाग्भवमित्यादिना॥वाग्भवमेकारः॥लोहितः पकारः।ऐस्वरूपं।श्रीकंठ अकारः लोहितपकारः॥अनलो रेफः।स एव दीर्घवान्।एद्
तिभवति।ऐस्वरूपं।परापरायैस्वरूपं।हसौ सदाशिवमहाप्रेतस्वरूपं ङें तेच ग्रथ्यंतपद्मासनं नमः स्वरूपं॥ततश्च ऐं परायै अपरायै परापरायै हसौः सदाशिव

दोर्मूलयोः कूर्परयोः पाण्योस्तत्र प्रदेशतः॥नाभौ गुह्ये पुनश्चोर्वोर्जानुनोर्जंघयोस्ततः २८ स्फिचोः पत्तलयोः पश्चाच्चरणांगुष्ठयोर्द्वयोः
कादिरांतान्यसे द्वर्णान्स्थानेष्वेषु समाहितः २९ कांच्यां ग्रैवेयके पश्चात्कटके हृदि गत्यके कर्णकुंडलयोर्मौलौ वललान् वक्षसा
न् शुहौ ३० अष्टाविमान्प्रविन्यस्य देवं देशिकसत्तमः॥एवं न्यस्तशरीरो सौ ध्यायेत्त्रिपुरभैरवीं ३१ उद्यद्भानुसहस्रकांतिमरु
णा क्षौमां शिरोमालिनीं रक्तालिप्तपयोधरां जपवटीं विद्यामभीतिं वरं॥हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्त्रारविंदश्रियं देवीं बद्धहि
मांशुरत्नमुकुटां वंदे रविंदस्थितां ३२ दीक्षां प्राप्य जपेन्मंत्रं तत्त्वलक्षं जितेंद्रियः॥पुष्पैर्भानुसहस्राणि जुहुयाद्ब्रह्मवृक्षजैः ३३ त्रिम
ध्वक्तैः प्रसूनैर्वा करवीरसमुद्भवैः॥पद्मं वसुदलोपेतं नवयोन्याढ्यकर्णिकं ३४ इच्छादिशक्तिभिर्युक्तं भैरव्याः पीठमर्चयेत्॥इच्छा
ज्ञाना क्रिया पश्चात्कामिनी कामदायिनी ३५ रती रतिप्रियानंदा नवमी स्यान्मनोन्मनी॥वरदाभयधारिण्यः संप्रोक्ता नवशक्त
यः ३६ वाग्भवं लोहितो रायैश्रीकंठं लोहितोनलः॥दीर्घवान्यैपरापश्चाद्परायैहसौः पुनः ३७ सदाशिवमहाप्रेत ङें तं पद्मासनं
नमः॥अनेन मनुना दद्यादासनं श्रीगुरुक्रमं ३८ प्राङ्मध्ययोरंतराले पूजयेत्कल्पयेत्पुनः॥ पंचभिः प्रणवैर्मूर्तिं तस्यामावाह्य
देवताम् ३९ पूजयेदागमोक्तेन विधानेन समाहितः॥तास्वाकशक्तिकमलाहसखफ्रें हसौः स्मृताः ४० वामकोणे यजेद्देव्या रतिमिंदु
समप्रभां॥रतिं पाशधरां सौम्यां मदविभ्रमविह्वलां ४१॥ ११ महाप्रेतपद्मासनाय नमः इति सिद्धमार्पूर्वमध्ययोरंतराले पंचप्रणवानेव दर्शयति॥ तारे
त्यादिना देव्या वामभागकोणेषु संपूज्या यथान्यासं पूर्वं। पूजापटलोक्तप्रकारेणांगानि संपूज्य निजैर्मंत्रैः॥पूर्वोक्तस्वस्वबीजैर्वाणान् यथोक्तलक्षणानभ्यर्चयेत्

प्रीतिं दक्षिणकोणस्थां तप्तकांचनसन्निभां॥ अंकुशं प्रणतिं दोर्भ्यां धारयंतीं समर्चयेत् ४१ अग्रे मनोभवां रक्तां रक्तपुष्पाद्यलंकृतां॥
इक्षुकार्मुकपुष्पेषून्धारयंतीं सुविस्मितां॥४२॥ अंगान्यभ्यर्चयेत्पश्चाद्यथापूर्वं विधानवित्॥ दिक्ष्वग्रे च निजैर्मंत्रैः पूजयेद्बाणदेवताः
४३॥ हस्ताब्जैर्धृतपुष्पेषु प्रणामाभूतसप्रभाः॥ अष्टयोनिषु शक्तीः पूजयेत्सुभगादिकाः ४४ मातरो भैरवांकस्था मदविभ्रमविह्वलाः॥
अष्टपत्रेषु संपूज्या यथावत्कुसुमादिभिः।४५। लोकपालांस्ततो दिक्षु तेषामस्त्राणि तद्बहिः॥ पूर्वजन्मकृतैः पुण्यैर्ज्ञात्वेनां परदेवतां॥
४५॥ यो भजेद्दत्तमार्गेण स भवेत्संपदां पदं॥ एवं सिद्धमनुर्मंत्री साधयेदिष्टमात्मनः॥४७॥ जुहुयादरुणांभोजैर्दोषैर्मधुराप्लुतैः॥ ल
क्षमेस्वंतरं हुत्वा प्रस्थं हं भोजयेद्द्विजान्॥४८॥ वनिता युवती रम्याः पूजयेद्देवताधिया॥ होमांते धनधान्याद्यैस्तोषयेद्गुरुमात्मनः ४९
एवं कृते जगद्वश्यो रमाया भवनं भवेत्॥ रक्तोत्पलैस्त्रिमध्वक्तैस्सरोर्वीहयाश्रिजैः ५० पुष्पैः पयोन्नैः सघृतैर्होमो विश्वं वशं नयेत्॥ वाक्
सिद्धिं लभते मंत्री पलाशकुसुमैर्हुतात्॥५१॥ कर्पूरागरुसंयुक्तं गुग्गुलुं जुहुयात्सुधीः॥ ज्ञानं दिव्यमवाप्नोति तेनैव स भवेत्कविः ५२ क्षीरो
तैरमृताखंडैर्होमः सर्वापमृत्युजित्। दूर्वाभिरायुषे होमः क्षीराक्ताभिर्दिनत्रयं ५३॥ गिरिकर्णीभवैः पुष्पैर्ब्राह्मणान्वशयेद्धुतात् कह्लारैः
पार्थिवान्पुष्पैस्तद्वधूः कर्णिकारजैः ५४ मल्लिकाकुसुमैर्हुत्वा राजपुत्रान्वशं नयेत्॥ कोरंटकुसुमैर्वैश्यान्वृषलान्पाटलोद्भवैः ५५ अनु
लोमविलोमांतःस्थितसाध्याह्वयान्वितं॥ मंत्रमुच्चार्य जुहुयान्मंत्री मधुरलोलितैः ५६ सर्षपैर्लवणोन्मिश्रैर्वशयेत्पार्थिवान्क्षणात्। अने
नैव विधानेन तत्पत्नीस्तत्सुतानपि ५७ जातीविल्वफलैः पुष्पैर्मधुरत्रयलोलितैः। नरनारीनरपतीन् होमतो वशयेद्ध्रुवम् ५८ मालतीवकु
लोद्भूतैः पुष्पैश्चंदनलोलितैः॥ जुहुयात्कवितां मंत्री लभते वत्सरांतरे ५९ मधुत्रयसंप्लुतैः फलैर्विल्वसमुद्भवैः। जुहुयाद्वशयेल्लोकांस्त्रि
॥

 हयारिजैः। करवीरजैः। अमृताखंडैः गडूचीखंडैः॥ मध्वाज्यमित्ययमर्थः॥ यंत्रमाह॥ मध्वाढ्यमिति॥ प्रथमं पूर्वे निर्ऋतिवायव्यकोणे वह्निमंडलं कृत्वा तत्पू
 र्वकोणमध्ये दक्षिणोत्तरे रेखां कृत्वा तस्य योर्यंत्रं कृत्वा यथा षट्कोणमध्ये कोणं भवति तथा कुर्यात्॥ एवं कृते नव योनिचक्रं भवेत्॥ तत्र षट्कोणमध्ययोनि
 मारभ्य॥ उपरितनमीशानकोणमारभ्य अष्टयोनिषु मंत्रवीजानि त्री णि त्री णि यथाक्रमं पुनः पुनर्लिखेत्॥ उपरि अष्टदलं पद्मं कृत्वा तत्पत्रेषु प्रत्येकं त्रिशः॥ त्रि

पाटलैः कुमुदैः कुंदैरुत्पलैर्नागचंपकैः। नंद्यावर्तैर्विकसितैः शतमाले जुहोति यः ६१ जायते वत्सरादर्वाक् श्रिया विजितपार्थिवः
॥साज्यमन्नं प्रजुहुयाद्भवेदन्नसमृद्धिमान् ६२ कस्तूरीकुंकुमोपेतं कर्पूरं जुहुयाद् वशी कंदर्पादधिकं सद्यः सौंदर्यमधिगच्छति।
६३ लाजान्प्रजुहुयान्मंत्री दधिक्षीरमधुप्लुतान्। विजितरोगानखिलान्मजीवेच्छरदां शतं ६४ पारदं पंमलयजं पारदं कुंकुमकेस
रं। पादं गोरोचनायाश्च तानि पिष्ट्वा हिमांबुना ६५ विदध्यात्तिलकं भूपो यान्यश्यपेद्यो विलोक्यते। यान्स्पृशेत्स्पृशते येवा वश्यास्तु
स्तस्य ते चिरात् ६६ कर्पूरकपिचोराणि समभागानि कल्पयेत्॥ चतुर्भागाजयामांसी ताबती रोचना मता ६७ कुंकुमं सप्तभागं स्या
द्विभागं चंदनं मतं अगरुर्नवभागः स्यादिति भागक्रमेण च ६८ हेमाद्रिकन्यकापिष्टमेतत्सर्वं सुसाधितं॥ आदायतिलकं भाले
कुर्याद्भूमिपतीन्नरान् ६९ वनितां मदगर्वाढ्यां मदोन्मत्तान्मतंगजान्॥ सिंहव्याघ्रान्महासर्पान्भूतवेतालराक्षसान् ॥ ७० ॥
दर्शनादेव वशयेत्तिलकं धारयन्नरः। मध्वाढ्यनवयोनिषु प्रविलिखेद्बीजानि वर्णास्त्रिशो गायत्र्याः पुनरष्टपत्रविवरेष्वालिख्य
लिप्यावृतां भूविंबहितं येन मन्मथपुजाकोणेषु संवेष्टितं यंत्रं त्रैपुरमीरितं त्रिभुवनप्रक्षोभकं श्रीप्रदं ७१ अस्मिन्यंत्रे समावाह्य
सम्यक् संपूज्य देवताम् होमेन कृतसंपातं लाक्षालोहन्नयावृतं ७२ विधृतं बाहुना यंत्रं युद्धेषु विजयावहं। वादे वाग्विजयं तु योतक वि
त्वेषु फलदिशेत् ७३॥ ११ शोभापत्रीवर्णान्। तदुपरि वृत्तं कृत्वा तन्मध्ये मातृकावर्णान्॥ तदुपरि भूपुरद्वयं॥ तत्कोणेषु मन्मथवीजं लिखेत्॥ एवं यंत्रे प्रोक्तफलदं 
अस्मिन्नर्थे मध्वादिति ग्रंथो योजनीयः त्रिलोहीमुद्रिकाविधानं वक्तुमारभते अस्मिन्नित्यादिना॥ लोहत्रयं सुवर्णरजतताम्राणि॥ यंत्रांतरमाह॥ वह्नेर्गेहमिति॥ षट्कोणं लिखित्वा॥ 
तन्मध्ये कामवीजं तन्मध्ये ह्रीमिति लिखित्वा॥ तत्कोणेषु वाग्भवप्रथमवीजं लिखेत्॥ ततः षिद्धंकारीपश्चात्॥ श्रीवीजेन वेष्टयेद्बहिः ॥ एतद्यंत्रं फलदम् ॥ ॥

एतैर्युक्तं द्वितीयंबीजं॥भृगुः सकारः सर्गोथः विसर्गयुतः

यंत्रांतरमाह॥अथ एकारः खविंदुयुतः।ब्रह्मा ककारः।इंद्रस्य लकारः युतः॥शशांकः विंदुः ईश्वरूपं।

आयुरारोग्यमित्राणिपुत्रान्पौत्रान्विवर्द्धयेत् कामं षट्कोणमध्येलिखतुपुनरिमंषट्सुकोणेषुपश्चात्त्रैपुर्यं च संख्येषुमुमथ
पुरतोव्योमवीजेनवीतं॥क्षोणीविंबांतरस्थंभुजदललिखितंरोचनाकुंकुमाभ्यांप्रोक्तंसौभाग्यसंपन्निरुपमकविताकीर्तिदंपंचर
मेतत्॥७५॥वह्नेर्गेहद्वयांतरस्थमदनेमायांलिखेद्वाग्भवं षट्कोणेषुयसंधिषुप्रविलिखेद्धूंकारमावेष्टयेत्॥स्त्रीवीजेनसमीरि
तंत्रिभुवनप्रक्षोभकंत्रैपुरं॥यंत्रंपंचमनोभवात्मकमिदंसौन्दर्यसंपत्करम् ७६ अथरोर्विंदुमानाद्योब्रह्मेंद्रस्थःशशीयुतः॥
द्वितीयंभृगुसर्गाढ्योमनुस्तार्तीयमीरितं ७७ एषाबालेतिविख्यातात्रैलोक्यवशकारिणी॥जपपूजादिकंसर्वमस्याःपूर्वव
दाचरेत् ७८ मान्मथंत्रिपुरादेविविद्महेपरमीरयेत्॥उक्त्वाकामेश्वरिपदंप्रवदेद्धीमहीततः ७९॥ तन्नःक्लिन्नेप्रवदेद्भूयस्तन्नः
क्लिन्नप्रचोदयात्॥गायत्र्येषासमाख्यातात्रैपुरीसर्वसिद्धिदा ८० स्तुत्यानयात्वांत्रिपुरेस्तोष्येभीष्टफलाप्तये॥ यथावज्रं
दाचरेत्
तितालक्ष्मीमनुजाःसुरपूजितां॥८१॥ब्रह्मादयस्तुतिपदैरपिसूक्ष्मरूपांजानंतिनैवजगदादिमनादिमूर्तिं॥ तस्माद्वयं
कुचनतांनवकुंकुमाभांस्थूलांस्तुमःसकलवाङ्मयमातृभूताम्॥८२॥सद्यःसमुद्यतसहस्रदिवाकराभांविद्याक्षसूत्रव
रदाभयचिह्नहस्तां॥नेत्रोत्पलैस्त्रिभिरलंकृतपद्मवक्त्रांत्वांतारहाररुचिरांत्रिपुरेभजामः॥ सिंदूरपुंजरुचिरंकुचभार
नम्रंजन्मांतरेषुकृतपुण्यफलैकगम्यं॥अन्योन्यभेदकलहाकुलमानभेदैर्जानंतिकिंजडधियस्तवरूपमंब ॥ ८३ ॥
॥ श्री॥

मनुः ओंकारः॥ तार्तीयंतृतीयंततश्चबालात्रिपुरोद्धृता॥ स्पष्टमपरम्॥ श्री॥० श्री॥० श्री॥०

स्थूलांवदंतिमुनयः श्रुतयोगृणंतिसूक्ष्मांवदंतिवचसामधिवासमन्ये॥त्वांमूलमाहुरपरेजगतांभवानिमन्यामहेवयमपारकृपांवुराशिं
॥चंद्रावतंसकलितांशरदिंदुशुभ्रांपंचाशदक्षरमयींहृदिभावयंति॥त्वांपुस्तकंजपवटीममृताढ्यकुंभंव्याख्यांचहस्तकमलैर्दध
तींत्रिनेत्रां॥८४॥शंभुस्त्वमद्रितनयाकलितार्द्धभागोविष्णुस्त्वमंबकमलापरिबद्धदेहः॥पद्मोद्भवस्त्वमसिवागधिवासभूमिस्तेषां
क्रियाश्चजगतित्रिपुरेत्वमेव॥ आश्रित्यवाग्भवभवांश्चतुरः परादीन्भावान्पदेषुविहितान्समुदीरयंतीं ॥ कंठादिभिश्चकरणैःपरदेवतां
त्वांसंविन्मयींहृदिकदापिनविस्मरामि ॥८५॥ आकुंच्यवायुमवजित्यचवैरिषट्कमालोक्यनिश्चलधियानिजनासिकाग्रं॥ध्यायंति
मूर्ध्निकलितेंदुकलावतंसंत्वद्रूपमंबकृतिनस्तरुणार्कबिंबं॥त्वंप्राप्यमन्मथरिपोर्वपुरर्द्धभागंसृष्टिंकरोषिजगतामितिवेदवादः॥
सत्यंतदद्रितनयेजगदेकमातर्नोचेदशेषजगतःस्थितिरेवनस्यात् ८६ पूजांविधायकुसुमैःसुरपादपानांपीठेतवांबकनकाचलग
ह्वरेषु॥गायंतिसिद्धवनिताःसहकिन्नरीभिरास्वादितासवरसारुणनेत्रपद्माः॥८७॥विद्युद्विलासवपुषंश्रियमावहंतींयांतींस्ववास
भवनाच्छिवराजधानीं॥सौषुम्नमार्गकमलानिविकाशयंतींदेवींभजेहृदिपरामृतसिक्तगात्रीं॥८८॥आनंदजन्मभवनंभवनंश्रुती
नांचैतन्यमात्रतनुमंबसमाश्रयामि॥ब्रह्मेशविष्णुभिरभिष्टुतपादपद्मांसौभाग्यजन्मवसतिंत्रिपुरेयथावत्॥८९॥शब्दार्थभावि
भुवनंसृजतींदुरूपायातद्बिभर्तिपुनरर्कतनुःस्वशक्त्या॥वह्न्यात्मिकाहरतितत्सकलंयुगांतेतांशारदांमनसिजातुनविस्मरामि ९०
नारायणीतिनरकार्णवतारिणीतिगौरीतिखेदशमनीतिसरस्वतीति॥ज्ञानप्रदेतिनयनत्रयभूषितेतित्वामद्रिराजतनयेविबुधा
वदंति ॥ ९१ ॥ येस्तुवंतिजगन्मातः श्लोकैर्द्वादशभिःक्रमात्॥त्वामनुप्राप्यवाक्सिद्धिंप्राप्नुयुस्तेपरांगतिम् ॥ ९२ ॥

अंत्रांतरमाहा। वाङ्मायेत्यादिना। वाक् वाग्भवंवीजं॥ माया हृल्लेखा कमला श्रीवीजं। तारः प्रणवः। नमोंतः भगवति स्वरूपं श्रीमतंगेश्वरि इति वा सर्वजनमनो
हरीत्यपि। अन्यदपि स्वरूपमेव। ब्रह्मा ककारः। नेत्रं रकारः। अग्निः रेफः। क्रिमिति सिद्धं। शिवयुतः। एकारयुक्तः रविः मकारः। मे इति भवति। अन्यत्स्वरूपं।
एषा मातंगिनी विद्या अक्षरन्यासमाह॥ ललाटेत्यादिना॥ अनाहते। उदरमध्ये। जठरे ततोधस्तनभागे स्वाधिष्ठानभागे॥ नाभेरधोभाग मूलाधारे। मूला

वाङ्मायाकमलास्तारं नमोंते भगवत्यथ॥ श्रीमातंगेश्वरि वदेत्सर्वजनमनोहरि ९३ सर्वोदिमुखराज्यंते सर्वोदिमुखरंजिनि। सर्वं
राजवशं पश्चात्करि सर्वं पदं वदेत्॥ ९४॥ स्त्रीपुरुषवशं ब्रह्मा नेत्रमग्न्यासनं पुनः। सर्वदुष्टमृगवशंकुरि सर्वभूतस्तव ९५ ॥ शं
कुरिस्मात्सर्वलोकममुकं शिवयुग्मविः। वशमानयजायाग्रेरष्टाशीत्यक्षरो मनुः ९६ न्यासान्मंत्री तनौ कुर्याद्दक्षमार्गान्यथाक्रमा
शिरोललाटभ्रूमध्यतालुकंठगलोरसि॥ ९७॥ अनाहते भुजद्वंद्वे जठरे नाभिमंडले। स्वाधिष्ठाने गुह्यदेशे पादयोर्दक्षिणान्ययोः
९८ मूलाधारे गुदे न्यस्येत्यदान्यष्टादशक्रमात्॥ गुणैकद्विचतुःषड्द्विवसुषट्पर्वताष्टभिः ९९ दशपंक्त्यष्टवेदाग्निचंद्रपक्षमग
पाशिभिः॥ पदज्ञैर्मिरियं प्रोक्ता मंत्रवर्णैर्यथाक्रमं १०० रत्याद्यामूलहृदयभ्रूमध्येषु विचक्षणाः॥ वाक्शक्तिलक्ष्मीवीजाद्यामा
तंग्यंत्याः प्रविन्यसेत् १०१ शिरोवदनहृद्गुह्यपादेषु विधिनान्यसेत्। हृल्लेखां गगनां रक्तां भूपो मंत्री करालिकां १०२ महोच्छुष्मां
चिनामादिवर्णवीजपुरःसराः। मातंग्यंतास्ततः षडंगानि ततः कुर्वीत साधकः १०३ वर्णैश्चतुर्विंशत्या स्याद्धृत्तपोदशभिः शिरः। शि
खाष्टादशभिः प्रोक्ता वर्मतावद्भिरक्षरैः १०४ स्यान्नेत्रपोदशभिर्नेत्रं द्वाभ्यामस्त्रं समीरितं॥ विभक्तैर्मूलमंत्रार्णैर्वाणन्यासमथाच
रेत्। मूर्द्धन्यास्ये गुह्ये हृदंभोजे प्रविन्यसेत्॥ द्राविणीं शोषिणीं भूयो वंधनीं मोहनीं पुनः १०६॥ १ धारेलिंगगुदमध्ये। पदेसक्षरविभागमा

ह। गुणेत्यादिना। गुणैस्त्रिभिः। वसुभिः अष्टभिः। पर्वताः। अष्टौ। पंक्तिः दश। वेदाः चत्वारि। अग्निस्त्रीणि। चंद्रः एकः। पक्षः द्वौ। वाग्वीजशक्तिवीजाद्या मातंग्यंताः
ततश्च। ऐं ओं ऐं रत्यै मातंग्यै नमः इत्यादिप्रकारेण उक्तस्थानेषु न्यसेदित्यर्थः। उक्तस्थानेषु। ओं ह्रीं हृल्लेखायै मातंगिन्यै नमः। ओं गं गगनायै मातंगिन्यै नमः॥ इ

ततउक्तरीत्या षडंगन्यासंकुर्यात्॥ ततः द्रांद्रांविण्यैमातंगिन्यैनमः। ॐयोक्षिण्यैमातंगिन्यैनमः इत्यादिप्रकारेणोक्तस्थानेषु पंचवाणान्न्यसेत्॥ ततउक्त
स्थानेषु मन्मथादीनष्टौन्यसेत्॥ कथं॥ ॐह्रींश्रीमन्मथमातंगिन्यैनमइत्यादिप्रकारेण अष्टौन्यस्तव्याः ततः वक्ष्यमाणस्थानेषु। ॐलक्ष्म्यैमातंगिन्यैनमः।

आकर्षिणीस्वनामादिवीजाद्याश्शुभलक्षणाः॥ मातङ्ग्यंत्यास्ततोन्यस्येन्मन्मथान्वदनांसयोः १०७ पार्श्वकट्योर्नाभिदेशेकटि
पार्श्वांसकेपुनः॥ वीजत्रयादिकान्मंत्रीमन्मथंमकरध्वजं १०८ मदनंपुष्पधन्वानंपुंचमंकुसुमायुधम्॥ कंदर्पनामानंमनोभ
वरतिप्रियौ १०९ मातङ्ग्यंतांस्ततोन्यस्येत्स्थानेष्वेतेषुमंत्रवित्॥ प्रथमानंगकुसुमाभूयोन्यानंगमेखला १० अनंगमदनातद्वदनं
गमदनातुरा॥ अनंगमदनवेगाभूयश्चानंगसंभवा १११ सप्तम्यनंगभुवनपालिनीस्यादथाष्टमी॥ अनंगशशिरेखान्यामातङ्ग्यंताः
समीरिताः ११२ विन्यस्तव्यास्थयोमूलेधिष्ठानेमणिपूरके। हृत्कंठास्येभ्रुवोर्मध्येमस्तकेमंत्रिणाततः ११३ आद्येलक्ष्मीसरस्वत्यौ
रतिःप्रीतिस्तथाकीर्तिका॥ शांतिःपुष्टिःपुनस्तुष्टिर्मातंगीपदशेखराः ११४ मूलमंत्रंप्रविन्यस्येन्निजमूर्द्धनिमंत्रवित्। आधारदेशे
धिष्ठानेनाभौपश्चादनाहते ११५ कंठवक्त्रेभ्रुवोर्मध्येमस्तकेविन्यसेत्क्रमात्। ब्राह्म्याद्याः पूर्ववत्प्रदिष्टामातंगीपदपश्चिमाः ११६
एषुस्थानेषुविन्यस्येदसितांगादिभैरवान्॥ मातङ्ग्यंतान्न्यसेन्मंत्रीमूलमंत्रंस्वमूर्द्धनि ११७ आधारदेशेधिष्ठानेनाभौपश्चा
दनाहते॥ कंठदेशेभ्रुवोर्मध्येविंदौभूयःकलापदे। ११८ निरोधिकायामर्द्धेंदौनादनादांतयोःपुनः। उन्मन्यांविष्णुवक्त्रेचध्रुव
मंडलकेशिवे ११९ मातङ्ग्यंताःप्रविन्यस्येद्वामांज्येष्ठामतःपरम्॥ रौद्रींप्रशांतिंश्रद्धांस्यांपुनर्माहेश्वरीमथ॥ १२० ॥

ॐसरस्वत्यैमातंगिन्यैनमः। इत्यादिप्रकारेणाष्टौन्यस्तव्याः ततउक्तस्थानेषुब्राह्मीमातरोन्यस्तव्याः मातंगीपदपश्चिमाः अनंतरंतेष्वेवस्थानेषुमातंग्यंतान्भैर
वान्न्यसेत् ततोवक्ष्यमाणस्थानेषु वामादिशक्तीर्न्यसेत्। विंदोर्ललाटांते। कलापदेवातदुपरिमूर्द्धस्थानेनिरोधिकाः तस्मादुपरितस्माडुपर्युपरिष्टादशांतपर्यंते

क्रियांशक्तिंसुलक्ष्मींवसुधृसंज्ञांचमोहिनीं।।प्रथमांप्वासिनींविद्युत्वतांविच्छतिमथ्यथ १२१ ततश्चसुंदरानंदांनंदबुद्धिमिमाः
कमात।शिरोभालहृदाधारेषेताबीजत्रयादिकाः १२२।।मातङ्ग्यंताःप्रविन्यस्येद्यथावद्देशिकोत्तमः।मातंगींमहदाद्यांतामहालक्ष्मीप
दादिकां।सिद्धलक्ष्मीपदाद्यांतांमूलमाधारमंडले।।न्यस्यतेनैवकुर्वीतव्यापकंदेशिकोत्तमः १२४ एवंन्यस्तशरीरोसौचिंतयेदात्मदेवतां
।।ध्यायेयंरत्नपीठेशुककलपठितंशृण्वतींश्यामलांगींन्यस्तैकांघ्रिंसरोजेशशिशकलधरावल्लकींवादयंती।कह्लारावद्धमालानियमि
तविलसच्चालिकांरक्तवस्त्रामातंगींशंखपत्रांमधुमदविवशांचित्रकोद्भासिभालां १२५।।अयुतंप्रजपेन्मंत्रीतद्दशांशंमधूकजैः।पुष्पै
स्त्रिमधुरोपेतैर्जुहुयान्मंत्रसिद्धये।। १२६।।त्रिकोणकर्णिकंपद्ममष्टपत्रंप्रकल्पयेत्।अष्टपत्रावृतंवास्येद्वृत्तंषोडशभिर्दलैः १२७ चतु
रस्त्रसमायुक्तंकोत्यादृष्टिमनोहरं।एतस्मिन्पूजयेत्पीठेनवशक्तीःक्रमादिमाः १२८ विभूतिरुन्नतिःकांतिःसृष्टिःकीर्तिश्चसन्नतिः।
व्युष्टिरुत्कृष्टिरृद्धिश्चमातंगीपदपश्चिमाः १२९ सर्वेतिशक्तिकमलासनायनमइत्यथा।।वाक्शक्तिलक्ष्मीबीजाद्योमनुरासनसंज्ञ
कः१३०।मूलेनमूर्तिसंकल्प्यतस्यामावाह्यदेवतां।।अर्चयेद्विधिनानेनवक्ष्यमाणेनमंत्रवित् १३१ रत्याद्यास्त्रिषुकोणेषुपूजयेत्पूर्व
वत्सुधीः।हृल्लेखाद्याःपंचपूज्यामध्येदिक्षुचमंत्रिणा १३२ पाशांकुशाभयाभीष्टधारिण्योभूतयःप्रभाः।अंगानिपूजयेत्पश्चाद्यथाविधि
विधानवित् १३३ बाणानभ्यर्चयेद्दिक्षुपंचमंडलतोयजेत्।दलमध्येषुसंपूज्याअनंगकुसुमादयः १३४।।पाशांकुशाभयाभीष्टधारिण्योरुणवि
ग्रहाः।।पत्राग्रेषुपुनःपूज्यालक्ष्म्याद्यावल्लकीकराः १३५।।बहिरष्टदलेपूज्यामन्मथाद्यामदोद्धताः।।अपरांगनिषंगाढ्याःपुष्पास्त्रेषुध
नुर्द्धराः १३६।पत्रस्थामातरःपूज्याब्राह्म्याद्याःप्रोक्तलक्षणाः।तदग्रेऽर्चयेद्विद्वानसितांगादिभैरवान्।१३७।पुनःषोडशपत्रेषु ।।
।।

शा॰ति॰ पूज्याः षोडशशक्तयः ॥ वामाद्याः कलवीणाभिर्गायंत्यः श्यामविग्रहाः ।१३८॥ चतुरस्रचतुर्दिक्षु चतस्रः पूजयेत्ततः ॥ मातंग्याद्या मदो
टी॰गृ॰ न्मत्ता वीणालालितपाणयः १३९ आग्नेयकोणे विघ्नेशं दुर्गां नैशाचरे यजेत् ॥ वायव्ये वटुकं पश्चादैशान्ये क्षेत्रपं यजेत् १४० लोकपा
५६ ला वहिः पूज्या वज्राद्यैरायुधैः सह ॥ मंत्रे स्मिन्साधिते मंत्री साधयेदिष्टमात्मनः १४१ मल्लिकाजातिपुन्नागैर्होमाद्वागालयो भवेत् ॥ फ
लैर्बिल्वसमुद्भूतैस्तत्पत्रैर्वा हुताद्भवेत् १४२ ॥ राजपुत्रस्य राज्याप्तिः पंकजैः श्रियमाप्नुयात् ॥ उत्पलैर्वशयेद्विश्वं लक्ष्मीपुष्पैस्तथा नरः ॥
१४३ बंधूकपुष्पैर्वकुलैर्जपोत्थैः किंशुकोद्भवैः । वश्यायजुहुयान्मंत्री मधुना सर्वसिद्धये १४४ लवणैर्मधुरोपेतैर्हुत्वा कर्षति सुंदरीः ॥
वंजुलस्य समिद्धोमो वृष्टिं वितनुते चिरात् १४५ ॥ क्षीराक्तैरमृताखंडैर्होमो नाशयति ज्वरं ॥ दूर्वाभिरायुराप्नोति कंदैर्वैश्यमाप्नुयात् १४६
अन्नवानन्नहोमेन तंडुलैर्धनवान्भवेत् । सर्वैस्त्रिमधुरोपेतैर्होमद्रव्यमुदाहृतं ॥ १४७ ॥ नंद्यावर्तभवैः पुष्पैर्होमो वाक्सिद्धिदायकः । निं
बप्रसूनैर्जुहुयादीप्सितां श्रियमश्नुते १४८ पलाशकुसुमैर्होमात्तेजस्वी जायते नरः । चंदनागुरुकर्पूररोचनाकुंकुमादिभिः १४९ व
श्याय जुहुयान्मंत्री वशयेदखिलं जगत् ॥ एतानि जप्त्वा तिलकं कुर्यात्त्रैलोक्यप्रियो भवेत् १५० निर्गुंडीमूलहोमेन निगडान्मुच्यते नरः
निंबतैलान्वितैर्लोणैर्होमः शत्रुविनाशनः १५१ हरिद्राचूर्णसंमिश्रैर्लवणैः स्तंभयेत्परान् । रसवद्भिः फलैः पत्रैः पुष्पैरपि मलान्वितैः
१५२ हुत्वा सम्यगवाप्नोति साधकः सर्वमीप्सितं ॥ देवतां जगतामाद्यां मातंगीमिष्टदायिनीं । १५३ ॥ अवाप्तुमिष्टां तां वाचं भूषयेद्रत्नमा राम॰
लया ॥ आराध्य मातश्चरणांबुजं ते ब्रह्मादयो विश्रुतकीर्तिमापुः १५४ अन्ये परं वा विभवं मुनींद्राः परां श्रियं भक्तिभरेण चान्ये । नमामि ५६
देवीं नवचंद्रमौलिं मातंगिनीं चंद्रकलावतंसां १५५ । आम्नायवाग्भिः प्रतिपादितार्थं प्रबोधयंतीं शुकमादरेण ॥ विनम्रदेवासुरमौलिरत्नैर्नी

ततोवक्ष्यमाणध्यानेषु महामातंग्याभ्यस्तव्याः। कथं ॐ ऐं ह्रीं श्रीमातंगिन्यै नमः॥ महालक्ष्म्यै मातंगिन्यै नमः॥ सिद्धलक्ष्म्यै महामातंगिन्यै नम इत्यादिप्रकारेण प्रत्ये
कं बीजत्रयादिकान्यसेत्॥ ततो मूलमंत्रस्याधारमंडपे न्यस्यते नैवव्यापकं न्यसेत्॥ ततो वक्ष्यमाणवर्त्मना ध्यायेत्॥ वल्लकीं वीणां॥ चूडिकां शिखां॥ शंखप
त्रां॥ शंखमयकर्णाभरणां॥ मधुमदविवशां॥ आसवमदपरवशां॥ चित्रकोद्भासिभालां॥ चित्रकेण रक्तपीतरेखाभिः शोभितललाटां॥ एवंविधां देवीं ध्या

मातस्त्व
भजंति ये देवि महीपतीनां व्रजंति ते संपदमादरेण॥ मातंगलीलागमने भवत्याः सिंजानमंजीरमिषाद्भजंते॥१५६॥ मातस्त्व
भजंति ये देवि महीपतीनां व्रजंति ते संपदमादरेण॥ मातंगलीलागमने भवत्याः सिंजानमंजीरमिषाद्भजंते ॥ १५७ ॥ आस्फा
रीयं चरणारविंदमकृत्रिमाणां वचसां निगुंफाः॥ पदात्पदं सिंजितनूपुराभ्यां कृतार्थयंतीं पदवीं पदाभ्याम् ॥ १५८ ॥ माध्वी
लयंतीं कलवल्लकीं तां मातंगिनीमद्दृदयं धिनोतु॥ नीलांशुकावद्धनितंबबिंबां तालीदलेनार्पितकर्णभूषां॥ १५९ ॥ स्मरामि
मदाघूर्णितनेत्रपद्मां घनस्तनीं शंभुवधूं नमामि॥ तडिल्लताकांतमनर्घ्यभूषं चिरेण लक्ष्यं नवलोमराज्या॥ १६०॥ क
भक्त्या जगतामधीशं वलित्रयांकं तव मध्यबिंबं॥ नीलोत्पलानां श्रियमावहंतीं कांत्या कटाक्षैः कमलाकराणां॥ १६१ ॥
दंबमालांचितकेशपाशां मातंगकन्यां हृदि भावयामः॥ ध्यायेयमारक्तकपोलकांतं बिंबाधरन्यस्तललामरम्यं॥ १६२
आलोलनीलालकमायताक्षं मंदस्मितं ते वदनं महेशि॥ स्तुत्यानया शंकरधर्मपत्नीं मातंगिनीं वागधिदेवतां ताम्। १६२
स्तुवंति ये भक्तियुता मनुष्याः परां श्रियं नित्यमुपाश्रयंति॥ १६३॥ इति श्रीशारदातिलके द्वादशः पटलः ॥ १२ ॥ ॥

पूज्यो हो
येत्॥ पूजाप्रकारमाह॥ त्रिकोणेत्यादिना॥ पीठमंत्रमुद्धरति॥ सर्वांतेति॥ पूर्वोक्तबीजत्रयादिकोऽयं मंत्रः स्पष्टः॥ देवतां जगतामित्यंतप्रातनः॥ पूज्यो हो
यत्॥ पूजाप्रकारमाह॥ त्रिकोणेत्यादिना॥ पीठमंत्रमुद्धरति॥ सर्वांतेति॥ इति गूढार्थदीपिकायां द्वादशः पटलः ॥ १२ ॥ १२ ॥
मपरोग्रंथः स्पष्टः। आराध्यमातरमित्यादिपरमेश्वरिस्तोत्रं निगदव्याख्यातम् ॥

।त्रिपुरादिमंत्रकथनानंतरं गणेश्वरमंत्रान्वक्तुमारभते॥ पंचांतकइति॥ मंत्रमुद्धरति॥ पंचांतको गकारः॥ शशिधरः बिंदुयुतः॥ गमिति सिद्धं॥ दानपूरं॥ वेदल
क्षं हृदयावधिः॥ नमस्कारावधिः॥ भक्तलक्षितपुष्करान्॥ लड्डुकयुक्तशुंडलान्॥ यथा पूर्वं पूजापटलोक्तप्रकारेण अनुलोमविलोमस्थावीजक्रमात्॥ क्रमलिखि

अथवक्ष्ये गणपतेर्मंत्रान्सर्वार्थसाधकान्॥ यान्ज्ञात्वा साधका नित्यं साधयंति मनोरथान्॥ १॥ पंचांतकं शशिधरं वीजं गणपते
र्विदुः॥ गणकः स्यादृषिश्छंदो निचृद्विघ्नोस्य देवता॥२॥ षड्दीर्घभाजा वीजेन कुर्यादंगक्रियां मनोः॥३॥ सिंदूराभं त्रिनेत्रं
पृथुतरजठरं हस्तपद्मैर्दधानं दंतं पाशांकुशेष्टान्युरुकरविलसद्वीजपूराभिरामं॥ बालेंदुद्योतमौलिं करिपतिवदनं दानपू
रार्द्रगंडं भोगींद्राबद्धमौलिं भजत गणपतिं रक्तवस्त्रांगरागं॥४॥ वेदलक्षं जपेन्मंत्रं दशांशं जुहुयात्ततः॥ मोदकैः पृथुकैर्लाजैः
सक्तुभिः सेक्षुपर्वभिः॥५॥ नारिकेलैस्तिलैः शुद्धैः सुपक्वैः कदलीफलैः॥ अष्टद्रव्याणि विघ्नस्य कथितानि मनीषिभिः ६
तीव्रादिशक्तिभिर्युक्ते पीठे विघ्नेश्वरं यजेत्॥ तीव्रा चालिनी नंदा भोगदा कामरूपिणी उग्रा तेजोवती सत्या नवमी विघ्ननाशि
नी सर्वादिशक्तिकमलासनाय हृदयावधिः॥ ८॥ पीठमंत्रोयमेतेन प्रदद्यादासनं विभोः मूलेन मूर्तिं संकल्प्य तस्यां विघ्नेश्व
रं यजेत् ९ कर्णिकायां चतुर्दिक्षु प्रथमं पूजयेदिमान्॥ गणाधिपं गणेशानं तृतीयं गणनायकं ॥ १० ॥ गणक्रीडं पीतगौररक्तनी
लरुचः क्रमात्॥ सर्वान्नागेंद्रभूषाढ्यानभयलक्षितपुष्करान्॥ ११॥ यथा पूर्वं ततोभ्यर्च्येत्केसरेष्वंगदेवताः॥ पत्रमध्येषु वि
धिवद्वक्रतुंडादिकान्यजेत्॥ १२॥ वक्रतुंडमेकदंष्ट्रं महोदरगजाननौ॥ लंबोदराख्यं विकटं विघ्नराजमनंतरम्॥ १३ ॥

तवीजे। कथं वेगं देवदत्तं॥ महागणपति मंत्रमुद्धरति॥ श्रीशक्तिरिति॥ अपमर्थः॥ प्रथमं प्रणवं॥ श्रीशक्तिस्मरंभूः गणपतिवीजान्युच्चार्य चतुर्थ्यंतं गणपति

षट्बीजस्थस्वबीजेति॥ॐश्रींह्रींक्लींग्लौंगंगांहृ
मुखार्घ्यपश्चाद्वरद२सर्वजनंमेवशमानयस्वरूपंठद्वयंस्वाहाकारः॥अष्टाविंशत्यक्षरोमहागणपतिमंत्रः॥

सिद्धेमंत्रेप्रकुर्वीतप्रयोगान्कल्प
धूम्रवर्णेदलाग्रेषुब्राह्म्याद्याःपूजयेत्ततः॥लोकपालास्तदस्त्राणिदेवमित्थंप्रपूजयेत्।१४॥
देशितान् तर्पयेत्सलिलैःशुद्धैर्दिनशोगणनायकं १५॥चतुश्चत्वारिंशदाढ्यंचतुःशतमतंद्रितः॥प्रातःपुपान्पंडुलाद्वोगभीशर
धिकंनरः १६नारिकेलैःकृतोहोमश्चतुर्थ्यांश्रीप्रदोभवेत्॥शुक्लपक्षप्रतिपदमारभ्यदिनशःसुधीः १७चतुर्थ्यंतंनारिकेलसक्तु
लाजतिलैःक्रमात्॥चतुःशतंप्रजुहुयाद्वश्याःस्युःसर्वजन्तवः १८सतिलैस्तंडुलैर्होमाल्लक्ष्मीवश्यप्रदोभवेत्॥लाजैस्त्रिमधुरोपेतै
र्होमःकन्यांप्रयच्छति १९अनेनविधिनाकन्यावरमाप्नोतिवांछितं॥आज्यान्नहविषाहोमःसाधयेदीप्सितंनृणां।२०।दध्नाविलोलि
तैर्लोणैर्होमोनिशिचतुर्दिनं॥संवादंकुरुतेतद्वद्दूरस्थंपतितत्रतेसदा २१श्वेतार्कभवमूलेनरक्तचंदनदारुणा॥रभमयेननिंबेनहस्ति
दंतेनवाकृते २२विघ्नेश्वरंसमभ्यर्च्यशीतांशुग्रहणेजपेत्॥स्पृष्ट्वामंत्रीनिराहारस्तंशिखायांसमुद्वहन्॥२३॥युद्धेषुव्यवहारादौवि
जयश्रियमाप्नुयात्॥मंत्रेणानेनसंजप्तागोरोचनामदसंयुता २४तिलकक्रियथासर्वान्वशंनयतिमानवान्॥अनुलोमविलोमम
स्थवीजेनामसमालिखेत् २५नवनीतैःसमभ्यर्च्यस्पृष्ट्वाप्राणामनुंजपेत्॥अष्टोत्तरशतंभूयोमूलमंत्रंप्रजप्यतत्।२६।भक्षयेन्मो
नमास्थाययामिन्यांसप्तवासरं सवश्योजायतेशीघ्रंसाधकस्यनसंशयः २७श्रीशक्तिस्मरभूविघ्नबीजानिप्रथमंवदेत्।ङेंतंगण
पतिंपश्चाद्वरांतेवरदंपदं २८उक्त्वासर्वजनंमेंतेवशमानयठद्वयं॥अष्टाविंशत्यक्षरोपेतागणेशोमनुरीरितः २९गणकःस्यादृषिश्छं
दोगायत्रीनिचृदन्विता॥ दयायनमः॥इत्यादिप्रकारेणांगन्यासंकुर्यात्॥अथवा॥ॐगांहृदयायनमः॥श्रींगींशिरसेस्वाहा॥ह्रींगूंशिखायैवषट्॥क्लींगैं

कवकामहे॥ग्लौं॥

शा॰ति॰ महागणपतिः प्रोक्तो देवतादेववंदितः ॥३०॥ षड्दीर्घस्वबीजेन दीर्घभाजा प्रकल्पयेत् षडंगानि मनोरस्य यथाविधि विधानवित् ३१ न
टी॰गृ॰ वरत्नमयं द्वीपं स्मरेदिक्षुसुधांबुधौ ॥ तद्वीचीधौतपर्यंकं मंदमारुतसेवितं ॥३२॥ मंदारपारिजातादिकल्पवृक्षलतावृतं ॥ तद्भूतरत्नच्छायाभिर
५८ रुणीकृतभूतलं ॥३३॥ उद्यद्दिनकरेंदुभ्यां प्रज्ञासितदिगंतरं ॥ तस्य मध्ये पारिजातं नवरत्नमयं स्मरेत् ॥ ऋतुभिः सेवितं षड्भिरनिशं प्रीतिवर्द्ध
नैः तस्याधस्तान्महापीठे रचिते मातृकांबुजे ॥३५॥ षट्कोणांतस्त्रिकोणस्थं महागणपतिं स्मरेत् ॥ हस्तीन्द्राननमिंदुचूडमरुणच्छायं त्रिनेत्रं
रसादाश्लिष्टं प्रियया सपद्मकरया स्वांकस्थया संततं ॥ वीजापूरगदाधनुस्त्रिशिखयुक्चक्राब्जपाशोत्पलव्रीह्यग्रस्वविषाणरत्नकलशान्ह
स्तैर्वहंतं भजेत् ॥३७॥ गंडपालीगलद्दानपूरलालसमानसान् ॥ द्विरेफान्कर्णतालाभ्यां वारयंतं मुहुर्मुहुः ॥३८॥ कराग्रधृतमाणिक्यकुंभ
वक्त्रविनिर्गतैः ॥ रत्नवर्षैः प्रीणयंतं साधकान्मदविह्वलं ॥३९॥ माणिक्यमुकुटोपेतं रत्नाभरणभूषितं ॥ ध्यायेन्मंत्रं जपेन्मंत्री चतुर्ल
क्षं समाहितः ॥४०॥ चतुःसहस्रसंयुक्तं चत्वारिंशत्सहस्रकं ॥ दशांशं जुहुयाद्द्रव्यैरष्टभिर्मोदकादिभिः ॥ तर्प्पयेद्दिनशो विघ्नं प्रागुक्तेनै
ववर्त्मना ॥ प्रागुक्ते पूजयेत्पीठे विधिना गणनायकं ॥४२॥ त्रिकोणवात्ये पूर्वादि चतुर्दिक्षु समर्चयेत् ॥ अग्रस्य विल्ववृक्षाधः श्रियं श्री
पतिमर्चयेत् ॥४३॥ पद्मयुग्मधरा पद्मा चक्रशंखधरो हरिः ॥ दक्षिणे वटवृक्षाधो गौरीं गौरीपतिं यजेत् ॥४४॥ पाशांकुशधरा गौरी टंकशू
लधरो हरः ॥ पश्चिमे पिप्पलस्याधो रतिं रतिपतिं यजेत् ॥४५॥ रतिरुत्पलहस्ताढ्या कोदंडास्त्रधरः स्मरः ॥ सौम्ये प्रियंगुवृक्षाधो महीं योनि
णमर्चयेत् ॥४७॥ शुकव्रीह्यग्रहस्ता भूर्गदाचक्रधरः पतिः ॥ षट्सु कोणेषु संपूज्याः आमोदाद्याः प्रियान्विताः ॥४८॥ आमोदं सिद्धिस राम॰
हितं अग्रकोणे समर्चयेत् ॥ समृद्ध्या युतमभ्यर्च्चेत्प्रमोदं वह्निकोणतः ॥४९॥ सुमुखं कांतिसंयुक्तमीशकोणे समर्चयेत् ॥५०॥ ५८

नेत्रत्रयाय॥ गंग॰ अस्त्राय॥ गंडपाली गंडस्थलं गलद्दानपूरः स्रवन्मदप्रवाहः॥ भूबीजेति स्मृतिस्थमिति॥ स्मृतिर्गकारः॥ मांसः लकारः॥ श्रोत्रस्वरूपं बिंदुयुक्तः॥ अनुस्वारयुतः॥ ततः ग्लौं इति सिद्धं॥ यंत्रमुद्धरति॥ बीजं षट्कोणमध्येति॥ अस्यार्थः॥ त्रिकोणं लिखित्वा॥ तन्मध्ये प्रणवं तन्मध्ये गं बहिः षट्कोणं त्रिकोणा

दुर्मुखं मदनावत्या यजेद्दरुणकोणके॥ ५०॥ विघ्नं प्रमदया युक्तं कोणे नैशाचरे यजेत्॥ वायव्ये विघ्नकर्तारं द्राविण्या सह संयजेत्।

५१ पाशांकुशाभयाभीष्टधारिण्योऽरुणविग्रहाः॥ गंडभित्तिगलद्दानपूरधौतमुखांबुजाः॥ विघ्नास्तत्प्रमदाः सर्वा मदाघूर्णितलोचनाः

॥ एकहस्तधृतांभोजा इतरालिंगितप्रियाः॥ ५३॥ षट्कोणपार्श्वयोः पूज्यौ शंखपद्मनिधी क्रमात्॥ निजप्रियाभ्यां सहितौ पूर्वोदीरित

लक्षणौ ५४ केसरेष्वंगपूजा स्याद्ब्राह्म्याद्याः पत्रमध्यगाः॥ बहिर्लोकेश्वराः पूज्या वज्राद्दीनि ततः परं॥ ५५॥ इत्थं जपादिभिः सिद्धः

प्रयोगान्स्वमनीषितान्॥ साधयेद्द्रष्टभिर्द्रव्यैरन्यैर्वा कल्पचोदितैः॥ ५६॥ पद्महोमेन भूपालांस्तत्पत्नीरुत्पलैः शुभैः॥ मंत्रिणः

कुमुदैः फुल्लैर्विप्रानश्वत्थसंभवैः॥ ५७॥ समिद्भिरेन्नरपतीनुदुंबरसमुद्भवैः॥ प्लक्षैर्वैश्यान्वटोद्भूतैः शूद्रान्मंत्री वशं नयेत्॥

५८॥ मधुना स्वर्णलाभः स्याद्गोदुग्धेन लभेत गाः॥ आज्यहोमेन महतीं श्रियमाप्नोति मानवः ५९ दध्ना सर्वसमृद्धिः स्यादन्नेरन्न

पतिर्भवेत्। वृष्टिकामः प्रजुहुयाद्वेतसानां समिद्वरैः॥ ६०॥ कुसुंभकुसुमैर्हुत्वा वासांसि लभते चिरात्॥ प्रत्येकमादौ मूलेन चतुर्वारं प्र

वर्तयेत् ६१ श्रीशक्तिरतिभूलक्ष्मीः स्वबीजाद्याः प्रियान्विताः आमोदादीन्स्वबीजाद्यान्शक्तियुक्तांस्तु तर्पयेत् ६२ चतुरश्चतुरः पृथग्मं

त्री शंखपद्मनिधी पुनः। नामादिबीजसहितौ तर्पयेत्स्वप्रियान्वितौ ६३ तर्पणेनामुना स्वीयमिष्टं प्राप्नोति मंडलात्। स्मृतिस्थं शंसमो

बिंदुयुक्तं भूबीजमीरितं ६४ बीजं षट्कोणमध्ये स्फुरदनलपुरे तारगं दिक्षु लक्ष्मीमायाकंदर्पभूमीस्तदनु रसपुटेष्वालिखेद्बीजषट्कं। तत्सं

धिष्वंगमंत्रान्वसुदलकमले मूलमंत्रस्यवर्णान्॥ ९९ बहिः॥ दिक्षु यथाक्रमं श्रीं ह्रीं क्लीं ग्लौं इति लिखेत्॥ षट्कोणेषु प्रणवादिषड्बीजानि लिखित्वा कोणसं

धिष्वंगमंत्रान्। तत्परि अष्टपत्रांशे॥

पद्मं कृत्वा तद्दलेषु गणेशः त्रयस्त्रयः प्रत्येकमष्टाविंशद्वर्णा इति॥ अंत्यमंत्यदले लिखेत्॥ यंत्रं प्रोक्तफलदं॥ मंत्रांतरमाह इति॥ मायेति॥ माया हृल्लेखा॥ विरिप
दद्वंद्वं स्वरूपं॥ खङ्गीशो वकारः पावकः रकारः॥ वरवरदस्वरूपं॥ इतरत्स्पष्टम्॥ एष विरिगणपतिमंत्रः॥ षड्विंशत्यक्षरः॥ अंतःकरणं चत्वारि॥ वेदाश्चत्वारः॥
शिष्टान्यन्येषु विद्वान्विलिखतु गणशः अंत्यमंत्ये पलाशे॥ ६५॥ आवीतं लिपिभिः क्रमोत्क्रमवशान्पाशांकुशाभ्यामपि स्मागेहहृ
न्मयेन वेष्टितमिदं यंत्रं गणाधीशितुः॥ लाक्षाकुंकुमरोचनामृगमदैर्भूर्ये वरे हेम्नि वा संलिख्याभिवहन्न लभेत सकलैः संप्रार्थ
नीयां श्रियं॥ ६६॥ उक्तं महागणपतेर्विधानं सुरपूजितं॥ सर्वसिद्धिकरं पुंसां समस्तपुरुषार्थदं॥ ६७॥ मायाविरिपदद्वंद्वं ततो
गणपतिं वदेत्॥ खङ्गीशपावकोपस्थाद्वरदांते पुनर्वदेत्॥ ६८॥ सर्वलोकं मे वशमानय ठद्वयं॥ षड्विंशत्यक्षरो मंत्रो भज
तां कल्पपादपः ६९॥ गणकः स्यादृषिश्छंदो गायत्रं देवता मनोः॥ विरिविघ्नेश्वरः प्रोक्तो भजतां कल्पपादपः॥ ७०॥ अंतः
करणवेदेषुभूतपंचविलोचनैः॥ एवं विभक्तैर्मंत्राणैर्मायाद्यैरंगकल्पना ७१ महागणपतेः प्रोक्तोऽस्या नेमंत्री विचिंतयेत्॥ सिं
दूराभमिभाननं त्रिनयनं हस्तेषु पाशांकुशौ बिभ्राणं मधुमत्कपालमनिशं साद्रींदुमौलिं भजे॥ पुष्ट्याश्लिष्टतनुं ध्वजाग्रकरया पद्मो
ल्लसद्धस्तया तद्योन्याहितपाणिमात्तवसुमत्पात्रोल्लसत्पुष्करम् ७२ चतुर्लक्षं जपेन्मंत्रं तद्दशांशं हुतक्रिया॥ प्राक्प्रोक्तैरष्टभिर्द्रव्यै
स्त्रिमध्वक्तैः समीरिता॥ ७४॥ पूर्वोक्ते पूजयेत्पीठे तीव्रादिनवशक्तिके॥ मूर्तिं मूलेन संकल्प्य तत्रावाह्यार्चयेद्विभुं॥ ७५॥ मिथुनावृति
राद्यास्याद्दामोदराद्यैर्दिगंबरैः॥ द्वितीयांगैस्तृतीया स्याच्चतुर्थी मातृभिः स्मृता ७६॥ पंचमी लोकपालैः स्यात्षष्ठी वज्रादिभिः स्मृ
ता॥ इति सिद्धमनुर्मंत्री प्रफुल्लैः सरसीरुहैः ७७ जुहुयाद्दशगाः सर्वेंतर्दुलैस्तिलमिश्रितैः॥ हुत्वा श्रियमवाप्नोति मोदकैराज्यलोलि
तैः॥ ७८॥ हुत्वा श्रियमवाप्नोति पार्थिवोपुद्भूमिषु॥ ९ इषु पंचभूतपंच॥ इषु पंच॥ विलोचनं द्वयं॥ मायासर्वत्रानुषज्यते॥ इभाननं
गजाननं भजेत् स्वष्टार्थमपरम्॥ मंत्रांतरमाह इति। शक्तिरुद्धामिति। शक्तिः ह्रींकारः। निजं बीजं गं। ततः ह्रीं गं ह्रीं इति भवति॥ ॥ ॥

महागणपतिंस्वरूपंङें·तं चतुर्थ्यंतं॥ अग्निवधूः स्वाहाकारः॥ इति द्वादशाक्षरो मंत्रः॥ अतिरोहितार्थमन्यत्॥ मंत्रांतरं रुद्र इति॥ शक्त्या रुद्रमिति॥ पूर्ववच्छक्ति पुटितं गणपतिबीजं॥ वशमानय स्वरूपं॥ ठद्वयं स्वाहाकारः॥ वरांगं योनिं॥ ध्वजाग्रं लिंगाग्रं॥ मंत्रान्तरमाह॥ संवर्तक इति॥ संवर्तकः क्षकारः॥ नेत्रयुतः॥

मधुरत्रयहोमेन वशं नयति पार्थिवान्॥ ७९॥ भक्ष्यभोज्यादिकं सर्वं हुत्वाभीष्टानि साधयेत्॥ शक्तिरुद्रं निजं बीजं महागणपतिं वदेत्॥ ८०॥ ङें·तमग्निवधूः प्रोक्तो मंत्रो यं द्वादशाक्षरः॥ गणकः स ऋषिश्छंदो गायत्री निचृदादिका॥ ८१॥ उदिता देवता तंत्रे नाम्ना शक्तिगणाधिपः॥ व्यस्तैः समस्तैर्मंत्रस्य पदैरंगानि कल्पयेत् ८२ मुक्तागौरं मदगजमुखं चंद्रचूडं त्रिनेत्रं हस्तैः स्वीयैर्दधतमरविंदांकुशौ रत्नकुंभं॥ ८३॥ अंकस्थायाः सरसिजरुचः स्वध्वजालं विपाणौ देव्यायोनौ विनिहितकरं रत्नमौलिं भजामः॥ ८४॥ लक्षमेकं जपेन्मंत्रं मधूकैस्तद्दशांशतः॥ जुहुयादर्चिते वह्नौ दिनशो देवमर्चयेत्॥ ८५॥ प्राक्प्रोक्ते पूजयेत्पीठे प्राक्प्रोक्तेनैव वर्त्मना॥ इष्टेष्वर्खेर्मतिमान्नरः शंकराम्बितैः॥ ८७॥ वशं नयति ज्यश्रियमवाप्नुयात् ८६॥ नारिकेरफलैस्तद्वद्रंभापक्वफलैस्ततः॥ वशयत्यखिलंलोकं पृथुकैः शर्करान्वितैः॥ ८७॥ वशं नयति राजानं सक्तुभिर्ब्राह्मणान् शुभैः॥ घृतहोमेन धनवाञ्जायते नात्र संशयः॥ ८८॥ शक्त्या रुद्रं निजं बीजं वशमानय ठद्वयं॥ ताराद्योयं समाख्यातो रुद्रसंख्याक्षरो मनुः॥ ८९॥ ऋष्याद्याः पूर्वमुक्ताः स्युरंगं मंत्रपदैर्भवेत्॥ एकेनाद्यो त्रिभिर्द्वाभ्यां त्रिभिर्द्वाभ्यामनंतरम्॥ ९०॥ समस्तेनास्त्रमाख्यातमंगक्लृप्तिरियं मता॥ हस्तैर्विभ्रतमिक्षुदंडवरदौ पाशांकुशौ पुष्करस्पृक्स्वप्रमदावरांगमवयाश्लिष्टं ध्वजाग्रस्पृशा॥ श्यामांग्या विधृताङ्कया त्रिनयनं चंद्रार्धचूडं जपारक्तं हस्तिमुखं स्मरामि सततं भोगातिलोलं विभुं ९१ लक्षत्रयं जपेन्मंत्रमिक्षुखंडैर्दशांशतः॥ अपूपैराज्ययुक्तैर्वा जुहुयान्मंत्रसिद्धये ९२ स्वगुरुं धनधान्याद्यैः प्रीणयेत्प्रीतिमानसः॥ पूजा पूर्ववदुद्दिष्टा ततः

इकारयुतः॥ पार्श्वः पकारः॥ वज्रासनः॥ रेफयुतः॥ ततः क्षिप्रः इति भवति॥ प्रसादनाय स्वरूपं॥ हृत् नमः॥ गणपबीजाद्यः ग्लौं वर्मसमन्वितं॥ कपाल

हुत्वा पूपैस्त्रिमध्वक्तैर्वशयेद्भुवि पार्थिवान् ॥ चतुर्थ्यां नारिकेलेन महतीं श्रियमश्नुते ॥ ९४॥ लवणैर्मधुसंयुक्तैर्वशयेद्वनिताजनं
संवर्तो नेत्रसंयुक्तः पार्श्वो वन्ह्यासनः स्थितः ॥ ९५॥ प्रसादनाय हृन्मंत्रः सबीजो ढ्योदशाक्षरः ॥ गणको मुनिरस्यस्याद्विराट्छंद उदा
हृतं ॥ ९६॥ क्षिप्रप्रसादनो विघ्नो देवता समुदाहृता ॥ दीर्घयुक्तेन बीजेन षडंगानि प्रकल्पयेत् ॥ ९७॥ पाशांकुशौ कल्पलतां विषाणं दध
त्स्वशुंडाहितबीजपूरः ॥ रक्तस्त्रिनेत्रस्तरुणेन्दुमौलिर्हारोज्ज्वलो हस्तिमुखोवताद्वः ॥ ९८॥ लक्षं जपेज्जपस्यांते जुहुयाद्युतं तिलैः ॥
मधुरत्रितयैर्द्रव्यैरथवा षड्भिरीरितैः ॥ ९९॥ एकाक्षरोदिते पीठे वक्ष्यमाणेन वर्त्मना ॥ पूजयेद्गंधपुष्पाद्यैर्धूपदीपैर्गजाननं ॥ १००॥
अंगानि पूर्वमाराध्य विघ्नानष्टौ यजेत्ततः ॥ विघ्नं विनायकं शूरं वीरं वरदसंज्ञकं ॥ १०१॥ इभवक्त्रं चैकरदं लंबोदरमनंतरं ॥ पत्राग्रेष्वर्च
येत्पश्चाद्ब्राह्म्याद्यास्तदनंतरं ॥ १०२॥ लोकपालांस्तदस्त्राणि विघ्नपूजा समीरिता ॥ आज्यान्नैर्जुहुयान्नित्यमन्नवान्वत्सराद्भवे
त् ॥ १०३ ॥ पायसान्नेन महतीं श्रियमाप्नोति मानवः ॥ आज्यहोमेन वशयेत्साराणिनः सकलान्सुधीः ॥ १०४॥ नारिकेलफलं
पक्वं लोष्ट्रचर्मसमन्वितं ॥ जुहुयात्प्रत्यहं मंत्री मंडलात्सिद्धिमाप्नुयात् ॥ १०५॥ जुहुयादष्टभिर्द्रव्यैर्मधुस्त्रयसंयुतैः ॥ वशये
त्पार्थिवान्सर्वान् तत्पत्नीं विधिनामुना ॥ १०६॥ दिनादिषु चतुश्चत्वारिंशद्वारं शुभोदकैः ॥ तर्पयेद्विघ्नराजस्य मस्तके श्रीप्रसि
द्धये ॥ १०७॥ पाशांकुशौ कल्पलतां स्वदंतं करैर्वहंतं कनकाद्रिकांतं ॥ सोपानपंक्त्या दिननाथबिंबाद्यापांतमंभोजगतं विचिं
त्य ॥ १०८॥ प्रागुक्तमंत्रसंप्रोक्तान्प्रयोगान्मनुनामुना ॥ तैरस्मिन्नथवा प्रोक्तान्कुर्यान्मंत्री विधानवित् ॥ १०९ ॥ ॥
॥ ॥

उपरितनमाच्छादनसहितं॥दिनादिषु प्रातरेव॥मंत्रांतरमाह॥पंचांतक इति॥गकारो विंदुयुतः॥वामकर्णओकारः गूं॥तारादिः प्रणवादिः नमोंतः वरदं वरं टंकं कु
ठारः॥शिरोभिर्ग्रथितां मालां॥त्रिशिखं त्रिशूलं॥आसनमंत्रमुद्धरति॥प्रणव इति॥कवचं हूं हूं॥हुंकारः हूं हूं महासिंहाय स्वरूपं गं स्वरूपं हेरंबस्वरूपम् हृदन्वितः।

पंचांतको विंदुयुतो वामकर्णविभूषितः॥तारादिर्हृदयांतो यं हेरंबमनुरीरितः॥११०॥चतुर्वर्णात्मको नृणां चतुर्वर्गफलप्रदः॥
षट्दीर्घभाजा वीजेन षडंगानि प्रकल्पयेत् १११॥मुक्ताकांचननीलकुंदघुसृणाच्छायैस्त्रिनेत्रान्वितैर्नागास्यैर्हरिवाहनं शशि
धरं हेरंबमर्कप्रभं॥दृप्तं दानमभीतिमोदकरदान् टंकं शिरोक्षात्मिकां॥मालां मुद्गरमंकुशं त्रिशिखकं दोर्भिर्दधानं भजे ११२ ल
क्षत्रयं जपेन्मंत्रं दशांशं जुहुयात्तिलैः॥तीव्रादिपूजिते पीठे देवं हेरंबमर्चयेत्॥११३॥प्रणवः कवचं हूं हूं महासिंहाय गां ततः॥हेर
वेति पदं पश्चादासनाय हृदं ततः।११४।अयमासनमंत्रः स्यात्प्रदद्यात्स्मनासनं॥तारादिविघ्नवीजेन मूर्तिं तस्य प्रकल्पयेत्॥११५
आवाह्य पूजयेत्तस्यामंगावरणसंयुतम् वात्येलोकेश्वराः पूज्या वज्रादीनि ततः परं॥११६॥एवमभ्यर्चयेन्नित्यं साधयेत्स्वमनी
षितान्।मोदकैर्जुहुयात्स्वच्छामष्टम्यां कृशरैस्तथा ११७ चतुर्दशीदिने पूपैर्जुहुयाद्वांछितात्मये।एभिर्द्रव्यैः प्रजुहुयान्मंत्री पर्व
दिनेषु च ११९ साधयेत्सकलान्कामान्पत्नेनैव प्रसाधकः।अंभोजं प्रथमं लिखेद्वसुदलं मध्ये स्ववीजांतरे साध्याख्यां वहिरगमं
त्रविलसत्किंजल्कसंशोभितं।पत्राणामुदरे विभज्य मुनिशो मालामनुं शोषितान्॥षड्वर्णीश्वरमेदले परिवृतं शत्याशाकारेण तु॥
१२० रोचनामदकाश्मीरैर्भूर्जपत्रे विलिख्य तत्। वेष्टितं श्वेतसूत्रेण लोहैस्त्रिभिः परिक्रमात्॥१२१॥१ नमोन्वितः॥एवमासनमंत्रः॥मंत्रमुद्

रति॥अंभोजमित्यादिना॥प्रथमं वसुदलपद्मं कृत्वा॥तत्कर्णिकायां महागणपतिवीजमध्ये नाम विलिख्य केसरस्थाने विदिक्कोणे हृदादि दिक्षु नेत्रमित्ये ॥
वंप्रकारेण अंगमंत्राणि विलिख्य॥पूर्वाद्यष्टपत्रमध्ये यथाक्रमं मालामंत्रं वस्यमाणं मुनीन् सप्तसप्त विभज्य लिखेत्॥ ॥

॥ ॥शिष्टवर्णषट्कमपि अंत्यपत्रे लिखेत्॥ पद्माद्बहिः॥ शक्त्या भुवनेश्वरीवीजेन सकारेण च वेष्टयेत्॥ सुवर्णरजतताम्रैश्च वेष्टयेत्॥ एतद्यंत्रे उक्तफलं ई माला
मंत्रमुद्धरति॥ शक्त्यंकुश इत्यादिना॥ शक्तिर्भुवनेश्वरी॥ अंकुशः क्रों॥ प्रणवांते॥ गणपतिवीजं॥ हृदयं नमः॥ सर्वविघ्नाधिपतये सर्वार्थसिद्धिदाय सर्वं ङे इत्यस्य प्र
धारयेद्बाहुना यंत्रं सर्वकामानवाप्नुयात्। शक्त्यंकुशप्रणवांते स्यात्स्ववीजं हृदयं ततः॥१२२॥ सर्वविघ्नाधिपायांते ङेंतं सर्वार्थसिद्धिदं
प्रवदेत्सर्वङः स्वप्रशमनायपदं ततः १२३ एह्येहि भगवन्सर्वान्सादय स्तंभय द्वयं॥ भुवनेशी स्ववीजं गां नतिः पावकवल्लभा १२४।
पुनरंकुशमायांतः पंचपंचाशदक्षरः॥ मालामंत्रोयमनुना प्रयोगान्साधयेत्सुधीः १२५॥ तारं खड्गीश्वरः कूर्मो निःस्वरेणांतरितः
भुवेनतिः सप्तवर्णः सुब्रह्मण्यात्मको मनुः १२६ वह्निवीजेन षड्दीर्घयुक्तेनांगक्रिया मता॥ सिंदूरारुणकांतिमिंदुवदनं केयूरहा
रादिभिर्दिव्यैराभरणैर्विभूषिततनुं स्वर्गस्य सौख्यप्रदं॥ अंभोजाभयशक्तिकुक्कुटधरं रक्तांगरागांशुकं सुब्रह्मण्यमुपास्महे प्र
णमतां भीतिप्रणाशोद्यतं १२८ लक्षमेकं जपेन्मंत्रं साज्येन हविषा ततः। दशांशं जुहुयादंते ब्राह्मणानपि भोजयेत्॥१२९ धर्मा
दिकल्पिते पीठे वह्निमंडलपश्चिमे। पूजयेद्विधिना देवमुपचारैर्यथोदितैः॥१३०॥ केसरेष्वंगपूजा स्यात्पत्रमध्यगतानिमानाज
यं तारख्यमग्निवेश्यं कृत्तिकापुत्रसंज्ञकं १३१ अनंतरं भूतपतिसेनान्यं गहसंज्ञको हेमश्रूलं विशालाक्षं शक्तिश्रूलकरान्यजेत्।
१३२ दिग्दलाग्रेषु पूर्वादिदेवसेनापतिं पुनः॥ विद्यामथीततो वज्रं कोणस्थो शक्तिकुक्कुटौ १३३ मयूरं द्वयमभ्यर्च्य वाल्येलोके
श्वरान्पुनः। अस्त्राणि तेषामंते स्युः सुब्रह्मण्यार्चनेरिता १३४ साज्यैर्भक्ष्यभोज्याद्यैः षष्ठ्यां संप्रीणयेद्द्विजान्॥ पूजयेद्देवतां तथा
कुमारान्ब्रह्मचारिणः १३५ संतानविजयश्रीयैरक्षामायुः श्रियं पशून्॥ प्रदद्यात्साधकस्याशु सुब्रह्मण्यः सुरार्चितः १३६॥ ॥शामायएह्येहि
भगवन्सर्वान्सादय स्तंभय २ भुवनेश्वरी स्ववीजं गां नमः स्वाहा॥ पुनरंकुशमायावीजौ। पंचपंचाशदक्षरं मंत्रांतस्माह। तारमिति। तारं प्रणवः। खड्गीश्वरः नकारः कूर्मः

जयतर्पणपूजादौविघ्नेशेसर्वसिद्धिदं॥ प्रीणयेद्दनपात्सुत्याप्राप्नयेसर्वसंपदां १३७ ॐकारमाद्यंप्रवदंतिसंतोवाचःश्रुतीनामपियं
गृणंति॥ गजाननंदेवगणाननंतोप्रिंभजेहमर्द्धेदुकृतावतंसं॥ पादारविंदार्चनतत्पराणांसंसारदावानलभंगदक्षं॥ निरंतरंनिर्गतदा
नतोयैस्तंनौमिविघ्नेश्वरमंबुदाभं १३८ कृतांगरागंनवकुंकुमेनमत्तालिमालांमदपंकमग्नां॥ निवारयंतंनिजकर्णतालैःकोविस्मरेत्पु
त्रमनंगशत्रोः १३९ शंभोर्जटाजूटनिवासिगंगाजलंसमादायकरांबुजेन॥ लीलाभिराराच्छिवमर्चयंतंगजाननंभक्तियुतोभजामि॥
१४० कुमारमुक्तौपुनरात्महेतोःपयोधरौपर्वतराजपुत्र्याः॥ प्रक्षालयंतंकरसीकरेणमौग्ध्यातुरंनागमुखंभजामि १४१ त्वयासमुद्धृत्यग
जास्यहस्तेयेसीकराःपुष्करंरंध्रमुक्ताः॥ व्योमांगणेतेविचरंतिताराःकालात्मनामौक्तिकतुल्यभासः १४२ क्रीडारतेवारिनिधौगजास्ये
वेलामतिक्रामतिवारिपूरे॥ कल्पावसानंपरिचिंत्यदेवाःकैलासनाथंश्रुतिभिःस्तुवंति॥१४३॥ नागाननेनागकृतोत्तरीयेक्रीडा
रतेदेवकुमारसंघैः॥ त्वयिक्षणंकालगतिंविचिंत्यतोयंत्यपतुःकंदुकतामिनेंद्रू॥१४४॥ मंदोल्लसत्पद्मरवेरजस्तमध्यापयंतंसक
लागमार्थान्॥ वेदान्दधीन्मतजनैकमित्रंहेरंबमकारुणमाश्रयामि॥१४५॥ पादांबुजाभ्यामतिवामनाभ्यांकृतार्थयंतंकृपयाध
रित्रीं॥ अकारणंकारणमाप्तवाचांतंनागवक्त्रंनजहातिचेतः॥१४६॥ येनार्पितंसत्यवतीसुतायपुराणमालिख्यविषाणकोट्या॥
तंचंद्रमौलेस्तनयंतपोभिराप्यसानंदघनंभजामि॥१४७॥ पदंश्रुतीनामपदंस्तुतीनांलीलावतारंपरमष्ठमूर्तेः॥ नागात्मकोवापुरुषा
त्मकोवेत्यभेद्यमाद्यंभजविघ्नराजं॥१४८॥ पाशांकुशाभयवरदंत्वभीष्टंकरैर्दधानंकररंध्रमुक्तैः॥ मुक्ताफलाभैःपृथुशीकरौ
घैःसिंचंतमंगंशिवयोर्भजामि॥१४९॥ ॥

॥

॥ॐ वचंतभुवेनमः॥सप्तार्णो मंत्रः॥शेषं निगदव्याख्यातम्॥इति गूढार्थदीपिकायां त्रयोदशः पटलः॥१३॥गणपतिमंत्रकथनानंतरं चंद्रमसं वक्तुमारभते॥
अथेति मंत्रमुद्धरति॥खद्वीशो वकारः॥भृगुः सकारः॥विंदुरनुस्वारः॥मनुः औकारः॥ततः स्यौमिति भवति॥अन्ये त्वन्यथोद्धरंति॥सौमित्ययमेव।सांप्रदायिकाः

अनेकभेदं गजमेकदंतं चैतन्यरूपं जगदादिबीजं॥ब्रह्मेति यं ब्रह्मविदो वदंति तं शंभुसूनुं शरणं भजामि॥ १५०॥स्वांकस्थिताया
निजवल्लभाया मुखांबुजालोकनलोलनेत्रं॥स्मेराननाब्जं मदवैभवेन रुद्धं भजे विश्वविमोहनं तं॥१५१॥ये पूर्वमाराध्य गजाननं त्वां
सर्वाणि शास्त्राणि पठंति तेषां॥त्वत्तो न चान्यत्र तिपाद्यमेतैस्तदस्ति चेत्सर्वमसत्यकल्पं॥ १५२॥ हिरण्यगर्भं जगदीशितारं कविं पु
राणं रविमंडलस्थं॥गजाननं यं प्रविशंति संतस्तत्कालयोगैस्तमहं प्रपद्ये॥१५३॥वेदांतगीतं पुरुषं भजेहं आत्मानमानंदघनं हृ
दिस्थं॥गजाननं यन्महसा जनानां विघ्नांधकारो विलयं प्रयाति॥१५४॥शंभोः समालोक्य जटाकलापे शशांकखंडं निजपुष्करेण॥
स्वभग्नदंतं प्रविचिंत्य मौग्ध्यादाक्रष्टुकामः श्रियमातनोतु॥१५५॥ विघ्नार्गलानां विनिपातनार्थं स्वनारिकेलैः कदलीफलाद्यैः
॥प्रतारयंतो मदवारणास्यं प्रभुं नरोभीष्टमहं भजामि॥१५६॥यज्ञैरनेकैर्बहुभिस्तपोभिराराध्यमाद्यं गजराजवक्त्रं॥स्तुत्यानयाये
विधिना स्तुवंति ते सर्वलक्ष्मीनिलया भवंति॥१५७॥इति शारदातिलके त्रयोदशः पटलः॥ १३॥ अथोच्यते चंद्रमसो मनुः सर्वस
मृद्धिदः॥खद्वीशस्थो भृगुर्विंदुमनुस्वारसमन्वितः॥१॥सोमाय हृदयांतोयं मंत्रः प्रोक्तः षडक्षरः॥ऋषिरुक्तो भृगुश्छंदः पंक्तिः सो
मोस्य देवता॥२॥दीर्घभाजा स्वबीजेन मनोरंगक्रिया मता॥कर्पूरस्फटिकावदातमनिशं पूर्णेन्दुबिंबाननं मुक्तादामविभूषिते
नवपुषा निर्मूलयंतं तमः॥हस्ताभ्यां कुमुदं वरं च दधतं नीलालकोद्भासितं स्वस्यांकस्थमृगोदिताश्रयगुणं सोमं सुधाब्धिं भजे॥४
सौं सोमाय स्वरूपं हृदयांतो नमोंतः॥एवं षडक्षरः सोममंत्रः॥रसलक्षं षट्लक्षं॥पौर्णमास्यामित्यर्थः॥प्राक्तनो ग्रंथः स्पष्टार्थः ॥ ० ॥

रसलक्षंजपेन्मंत्रंसाधकोविजितेंद्रियः॥तत्सहस्रंप्रजुहुयात्पायसेनससर्पिषा॥५॥सोमांतंपूजितेपीठेपूजयेद्रोहिणीपतिं॥अंगानि
केसरेषुस्वस्तदेव्यःपत्रमध्यगाः॥६॥रोहिणीकृत्तिकाभूयोरेवतीभरणीपुनः॥रात्रिरार्द्राततोज्योत्स्नाकलाहारसमप्रभाः॥७॥सितमा
ल्यांवरधरामुक्ताहारविभूषणाः॥पयोधराभराक्रांतारचितांजलयःशुभाः॥८॥वल्लभासक्तमनसोमदविभ्रममंथराः॥समभ्यर्च्याःसरोजा
स्यश्चंद्रबिंबनिभाननाः॥९॥आदित्यमंगलबुधमंदवाक्पतिराहवः॥शुक्रकेतुयुताःपूज्यादलाग्रेषुग्रहाअमी॥१०॥स्वस्ववर्णावरोपे
ताःस्वनामाद्यवर्णबीजकाः॥रक्तारुणश्वेतनीलपीतधूम्रासितासिताः॥११॥वामोरुन्यस्ततद्धस्ताःदक्षिणेनधृताभयाः॥अंबुजाढ्यक
रोभानुर्दंष्ट्राभीममुखःशनिः॥१२॥राहुर्विकृतवक्त्रःस्यात्केतुःस्याद्रचितांजलिः॥लोकपालास्ततःपूज्यावज्राद्यस्वैःसहन्नमान्॥१३॥
एवंसिद्धमनुर्मंत्रीसंपदांवसतिर्भवेत्॥हृत्पुंडरीकमध्यस्थंताराहारविभूषणां॥१४॥तारापतिंस्मरन्मंत्रीत्रिसहस्रंमनुंजपेत्।राज्यैश्व
र्यैर्दरिद्रोपिप्राप्नुयाद्वत्सरांतरे॥१५॥पूर्वोक्तसंख्यंप्रजपेच्छशिनंमूर्ध्निचिंतयेत्॥रोगापमृत्युदुःखानिजित्वावर्षशतंवसेत् ॥ १६ ॥
ब्रह्मचर्यरतःशुक्लवस्त्रोलक्षमिदंजपन्॥निधानंभूगतंसद्यःप्राप्नुयाद्यत्नवर्जितं॥१७॥ जितेंद्रियोजपेन्मंत्रंपूर्णिमास्यांविशेषतः॥
भवेत्सौभाग्यनिलयः संपदामपरोनिधिः॥१८॥घोराञ्ज्वरान्शिरोरोगानभिचाराद्युपद्रवान्॥विद्विषामपिसंघातंनाशयेन्मनुनामुना॥
॥१९॥ पौर्णमास्यांनिराहारोदद्यादर्घ्यंविधूदये॥प्राक्प्रत्यमायतंकुर्याद्भूतलेमंडलत्रयं॥ २० ॥ निषण्णःपश्चिमेमंत्रीमंडलेविहिता
सने॥मध्यस्थेस्थापयेत्पश्चात्पूजाद्रव्याण्यशेषतः॥२१॥ अन्यस्मिन्मंडलेसोममर्चयित्वांबुजान्विते॥ राजतंचषकंभद्रंस्थापयेत्पु
रतःसुधीः॥२२॥ गोदुग्धेनसमापूर्यस्पृष्ट्वातंप्रजपेन्मनुं॥ अष्टोत्तरशतंपश्चाद्विद्यामंत्रेणदेशिकः ॥ २२ ॥ श्री॥०
॥
॥

शा·ति· टी·पू· ६३

॥अर्घदानप्रकारमेवाह॥ प्राक् प्रत्यगिति॥ चषके अर्घपात्रं॥ विद्यामंत्रमेवोद्धरति॥ विद्ये विद्यामालिनि चंद्रिणि चंद्रमुखि स्वाहा॥ मंत्रः अष्टोत्तरः॥ सूर्यमंत्रमुद्धरति॥ तारः प्रणवः घृणिः स्वरूपं॥ भृगुः सकारः॥ स एव वामकर्णविभूषितः॥ उकारयुक्तः॥ ब्रह्मासनो मरुत्॥ रेफसहितो यकारः॥ ततः यरतिसिद्धं॥ शेषः अनंतः॥ नेत्रईकारयुक्तो विरेकारः॥ ततो विरतिर्भवति॥ त्यपश्चिमः त्यकारावसानिकः॥ षडंगमंत्रानुद्धरति॥ सत्यायेत्यादिना। ततश्च सत्याय तेजोज्वालामणे हुं फट् स्वाहा॥

दद्यादर्घं शशांकाय सर्वकामार्थसिद्धये॥ अनेन विधिना कुर्वन्प्रतिमासमतंद्रितः॥२४॥ षण्मासाभ्यंतरे सिद्धिं साधकेंद्रः समश्नुते। श्रियमत्यूर्जितान्तुष्टान्सौभाग्यं विपुलं यशः॥२५॥ कन्यामिष्टामवाप्नोति कन्यापि वरमीप्सितं॥ बहुना किमिहोक्तेन सर्वं दद्यान्निशापतिः॥२६॥ विद्ये विद्यामालिनि स्याच्चंद्रिणीपदतो भवेत्॥ पुनश्चंद्रमुखि स्वाहा विद्यामंत्र उदाहृतः॥२७॥ तारो घृणिर्भृगुः पश्चाद्वामकर्णविभूषितः। ब्रह्मासनो मरुच्छेषस्सनेत्रो निस्त्यपश्चिमः॥२८॥ अष्टाक्षरो मनुः प्रोक्तो भानोरभिमतप्रदः॥ देवभागो मुनिः प्रोक्तो गायत्री छंद ईरितं॥२९॥ आदित्यो देवता प्रोक्तो दृष्टादृष्टफलप्रदः॥ सत्याय हृदयं प्रोक्तं ब्रह्मणे शिर ईरितं॥३०॥ विष्णवे स्याच्छिखा वर्म रुद्राय परिकीर्तितं॥ अग्नये नेत्रमाख्यातं शर्वायास्त्रमुदाहृतं॥३१॥ तेजोज्वालामणे हुं फट् द्विठांताः पृथगीरिताः॥ अंगमंत्राः पुनर्न्यस्येत्पंच मूर्तीर्यथाक्रमं॥ आदित्यं विन्यसेन्मूर्ध्नि रविं मुखगतं न्यसेत्॥ हृदये भानुनामानं भास्करं गुह्यदेशतः ३३ सूर्यं च चरणयोर्न्यस्येद्ध्रस्वैः सद्यादिपंचभिः॥ प्रधानमूर्तिप्रतिमाः सर्वाभरणभूषिताः ३४ मूर्द्धास्यकेशहृदयकुक्षिनाभिध्वजांघ्रिषु॥ मंत्रवर्णान्न्यसेद्धीप्रत्येकं प्रणवादिकान् ३५ एवं न्यस्तशरीरोऽसौ चिंतयेत्तेजसां निधिम्॥ रक्ताब्जयुग्माभयदानहस्तं केयूरहारांगदकुंडलाढ्यम्॥ माणिक्यमौलिं दिननाथमीडे बंधूककांतिं विलसत्त्रिनेत्रं॥३७॥

९९ हृदयाय नमः ब्रह्मणे तेजोज्वालामणे हुं फट् स्वाहा शिरसे इत्यादिप्रकारेण षडंगन्यासः॥ अंगमंत्रा ईरिताः इत्यर्धस्तनेन संबंधः॥ ह्रस्वैः सद्यादिपंचभिः॥ अइउऋऌ एभिरित्यर्थः पूजावसरे एवमादि पूजा प्रागेवा। उक्तस्थानेषु प्रभूतादि संपूज्य यथर्मा।

राम ६३

न्मुलक्षंजपेन्मंत्रंसमिद्भिःक्षीरशाखिनां॥तत्सहस्रंप्रजुहुयात्क्षीराक्ताभिर्जितेंद्रियः॥३८॥पीठस्यकूर्मेप्रथमंदिक्षुमध्येचसंयजेत्
प्रभूतंविमलंसारंसमाराध्यमनंतरं॥३९॥परमादिसुखंपीठस्यबिंबांतंप्रकल्पयेत्॥दीप्तासूक्ष्माजयाभद्राविभूतिर्विमलापुनः॥४०॥अमो
घाविद्युतासर्वतोमुखीपीठशक्तयः।दीप्तदीपशिखाकाराबीजान्यासांविदुःक्रमात्॥४१॥अक्षीवहूहस्वत्रितयस्वरान्बिंदुविसंयुतान्॥वदेत्पदं
चतुर्थ्यंतंब्रह्मविष्णुशिवात्मकं॥४२॥सौराययोगपीठायनमःपदमनंतरं॥पीठमंत्रोयमाख्यातोदिनेशस्यजगत्पतेः॥४३॥तारादिस्वंखगो
ल्कायनमसामूर्तिकल्पना॥साक्षिणंसर्वलोकानांतस्यामावाह्यपूजयेत्॥४४॥अंगानिपूजयेदादौदिक्पत्रेष्वर्कमूर्तयः॥आदित्याद्याश्च
त्वारोर्च्याःशक्तयःकोणपत्रगाः॥४५॥स्वस्वनामादिवर्णैःस्युस्तासांबीजान्यनुक्रमात्॥उषाप्रज्ञाप्रभासंध्याशक्तयःपरिकीर्तिताः॥४६॥
पत्राग्रसंस्थाब्राह्म्याद्याःपुरतोरुणमर्चयेत्॥चंद्रादीन्पूजयेत्पश्चाद्ग्रहान्पत्रेततोबहिः॥४७॥इंद्रादयस्तदस्त्राणियथापूर्वंसमर्चयेत्।ए
वंसंपूज्यविधिवद्भास्करंभक्तवत्सलं॥४८॥दद्यादर्घंप्रतिदिनंवारेवातस्यचोदिते॥प्रभातेमंडलंकृत्वापूर्ववत्पीठमर्चयेत्॥४९॥पात्रंताम्र
मयंप्रस्थतोयग्राहिमनोरमं॥विधायतन्मनुनापूरयेत्तच्छुभोदकैः५०कुंकुमंरोचनंराजीरक्तचंदनवेणवान्॥करवीरजपाशालीकुशश्या
माकतंडुलान्५१निक्षिपेत्सलिलेतस्मिन्नैक्यंसंकल्प्यभानुना॥सांगमभ्यर्चयेत्तस्मिन्भास्करंप्रोक्तलक्षणं॥गंधपुष्पादिनैवेद्यैर्यथावि
धिविधानवित्॥तद्विधायजपेन्मंत्रंसम्यगष्टोत्तरंशतं॥५३॥पुनःसंपूज्यगंधाद्यैर्जानुभ्यामवनींगतः आमस्तकंतदुद्धृत्यव्योम्निसावसरो
रवौ॥५४॥दृष्टिंविधायस्वैक्येनमूलमंत्रंधियाजपन्।दद्यादर्घंदिनेशायप्रसन्नेनांतरात्मना॥५५॥कृत्वापुष्पांजलिंभूयोजपेदष्टोत्तरं
शतं॥यावदर्घामृतंभानुःसमादत्तेनिजैःकरैः॥५६॥तेनतृप्तोदिनमणिर्दद्यात्स्वेमनोरथान्॥अर्घदानमिदंपुंसामायुरारोग्यवर्द्धनं५७
धनधान्यपशुक्षेत्रपुत्रमित्रकलत्रदं॥तेजोवीर्ययशःकांतिविद्याविभवभाग्यदं॥५८॥आकाशंवह्निदीर्घेन्दुसंयुतंभुवनेश्वरी॥सर्गान्वि

शा॰ ति॰ ॥ दीर्घेत्यादिना॥ अज्ञीवहीनन पुंसकचतुष्टयं॥ अं इं उं एतद्व्यतिरिक्तस्वरान्॥ आं ईं ऊं एं ऐं ओं औं अः॥ इत्येतान्स्वरान्॥ अग्निः रेफयुतान्॥ रां रीं इत्यादि॥ भासां
टी॰ मू॰ शक्तीनां बीजत्वेन विदुः॥ जानंति देशिकाः॥ पीठमंत्रमुद्धरति पदेत्यादिना॥ चतुर्थ्यंतः ब्रह्मविष्णुशिवात्मकाय योगपीठाय नमः स्वरूपं॥ अर्घदानप्रकारमाह
६४ प्रभातमिति॥ मंत्रांतरमाह॥ आकाशमित्यादिना॥ आ काशं हकारः। अग्निः रेफः। दीर्घः आकारः। इंदुः बिंदुः॥ एतैः सपिंडितं। प्रथमाक्षरं ह्रामिति भवति॥ भुवनेश्व
रीबीजं ह्रीं द्वितीयं सर्गान्वितो भृगुः॥ इति तृतीयाक्षरात्मको मंत्रः। स्वस्य इष्टार्थप्रदं॥ मंत्रांतरमाह॥ आकाशमग्नीति॥ आकाशः हकारः। अग्निः रेफः। पवनो यकारः। इसघात॥

आधारादिपदाग्रांतं कंठादाधारकावधि॥ मूर्द्धादिकंठपर्यंतं क्रमाद्बीजत्रयं न्यसेत् ६० षड्दीर्घस्वरयुक्तेन मध्येनांगानि कल्पयेत् रक्तांबुजासनमशेषगुणैकसिंधुं भानुं समस्तजगतामधिपं भजामि ६१ पद्मद्वयाभयवरान्दधतं कराब्जैर्माणिक्यमौलिमरुणांगरुचिं त्रिनेत्रं॥ भानुलक्षं जपेन्मंत्रमन्नाज्यैर्दशांशतः॥ तिलैर्वा मधुरासिक्तैर्जुहुयाद्विजितेंद्रियः ६३ पूर्वोक्ते प्रयजेत्पीठे विधानेनामुना रविं॥ प्रथमावृत्तिरंगैः स्यात्परा चंद्रादिभिर्ग्रहैः ६४ तृतीया लोकपालैः स्याच्चतुर्थी स्यात्तदायुधैः॥ इति संपूज्य निर्माल्यं तेजश्चंडाय दीयतां ६५ अर्घप्रागीरितं दद्याज्ज्ञानवान्संयतेंद्रियः॥ सोपि रत्नं धनं धान्यं पुत्रपौत्रान्यशःपशून् ६६ वस्त्राणि भूषणादीनि दद्यात्तस्मै न संशयः॥ आकाशमग्निपवनसद्योताघींशबिंदुमत् ६७ मार्तंडभैरवं नाम बीजमेतदुदाहृतं॥ पुटितं विंबबीजेन सर्वकामफलप्रदं ६८ दांतं दहननेत्रेंदुसहितं तदुदीरितं॥ पंचह्रस्वाढ्यबीजेन पंचमूर्तीः प्रविन्यसेत् ६९ मध्यमादिकनिष्ठांतमंगुलीषु क्रमादिमाः। सूर्यास्त्र्यो भास्करो भानुस्ततो रविर्दिवाकरौ॥ ७०॥ शिरोवदनहृद्गुह्यपाददेशेषु ताः पुनः। दीर्घयुक्तेन बीजेन नेत्रांतागानि विन्यसेत्॥ ७१॥

६९ औकारः अर्घीशः ऊकारः बिंदुरनुस्वारः। एतैः सपिंडितो मार्तंडभैरवो नाम एकाक्षरो मंत्रः॥ ततश्च ह्स्ख्फ्रौं इति सिद्धं भवति। एतदेव बीजं विंबबीजपुटितं सर्वकामार्थदमित्याह॥ पुटितमिति॥ बीजमंत्रमुद्धरति दांतो ठकारः। दहनो रेफः। नेत्र इकारः। इंदुरनुस्वारः॥ एतैः सपिंडितं बीजं ठ्रीमिति भवति राम॰
पंचह्रस्वेति॥ अ इ उ ए ओ॥ एभिः प्रत्येकं संपुटितं पुटितमूलबीजेन वक्ष्यमाणस्थानेन्यसेत्॥ मूर्तीर्दर्शयति। सूर्येत्यादिना। अंगान्यासमाह। दीर्घयुक्तेन मूलबीजेनेति। ६४

ध्यानमाह॥ हेमांभोजेति॥ खट्वांगं॥ एषु भागेषु प्रसिद्धः॥ खट्वांगमेवेत्यपरे॥ घृणिः अंकुशः खेटचक्रं चतुर्वक्त्रं अस्य प्रोक्तं दिवाकरमंत्रांतरमाह॥ वियदिति॥ वियद्धकारः॥
अर्द्धेन्दुरनुस्वारः॥ ततो हंक्षिति सिद्धं॥ तदादिः सकारः॥ विसर्गसहितः॥ ततः हंसः इति सिद्धं॥ हसाहकारयुक्तसकारेणातारेणेन षडंगानि कुर्यादित्यर्थः॥ अष्टदलपद्मं लिखित्वा
दिग्दलेषु क्रमेण आद्यतत्त्वेन नमः॥ नारायणनमः॥ परायनमः॥ इति पूजयेत्॥ मंत्राद्यमातृकापद्मे पूर्वोक्तमातृकापद्मं विलिख्य तत्कर्णिकायां हंसमंत्रान् लिखेत्॥ ०॥ तंकुं

व्यापकं मूलवीजेन कुर्वीत तदनंतरं॥ हेमांभोजप्रवालप्रतिमनिजरुचिं चारुखट्वांगपद्मौ चक्रं शंखं सपाशं सृणिमतिरुचिरामक्ष
मालां कपालं॥ हस्तांभोजैर्दधानं त्रिनयनविलसद्वेदवक्त्राभिरामं मार्तंडं वल्लभार्द्धं मणिमयमुकुटं हारयुक्तं भजामः ७३ लक्षत्रयं
जपेन्मंत्री वीजं विंबपटीकृतं॥ दशांशकमलैः फुल्लैर्जुहुयान्मधुरोक्षितैः ७४ पीठे दीप्तादिभिर्युक्ते कर्णिकायां प्रभादिकाः॥ पूर्वादिदि
क्षु संपूज्य मूर्तिं मूलेन कल्पयेत् ७५ आवाह्य पूजयेद्देवं वक्ष्यमाणविधानतः॥ रूपाद्यैश्च तथा दिक्षु विदिक्ष्वन्यान् समर्चयेत् ७६ अंग
पूजां यथापूर्वं नित्रमीशानदिग्गतं॥ ग्रहानष्टौ ततो वाह्ये लोकपालांस्ततः परं ७७॥ अर्घ्यप्रदानं च यजेन्मंत्री मार्तंडभैरवं॥ इति सिद्ध
मंत्रं मंत्री साधयेदिष्टमात्मनः ७८॥ शाल्याज्यतिलविल्वानां लक्षहोमान्निधिर्भवेत्॥ राजवृक्षसमुद्भूतैः समिद्भिर्होमो रमाकरः॥ ७९
जपाकुसुमहोमेन वशयत्यचिरान्नृपान्॥ मातुलुंगफलैर्हुत्वा धनमिष्टं लभेत सः ८० इमं मंत्रं जपन्मर्त्यः कांतिं ज्ञानं वलं द्युतिं।
वाक्सिद्धिममितां लक्ष्मीं सौभाग्यमपि साधयेत् ८१ वियदर्द्धेन्दुललितं तदादिः सर्गसंयुतः॥ अजपाख्यो मनुः प्रोक्तो द्व्यक्षरः स्मरपाद
पः ८२ ऋषिर्ब्रह्मा स्मृतो देवीगायत्री छंद ईरितं॥ देवता जगतामादिः संप्रोक्तो गिरिजापतिः ८३ हंसाभ्यां दीर्घयुक्तेन कुर्यादंगक्रियां मनोः

ंविंदुभ्यांमिति प्रयोगप्रकारं रूपत्वेन निरूपं भवति॥ हंस इत्यत्र विंदुभ्यां शिलन्॥ स्रवत्सुधापरिस्रीतं॥ परिस्रुतं॥ मंत्रोत्पवीजं॥ स इत्यक्षररूपं वित्यतत्तस्मात्प्र
कारात् प्रद्योतत्परमामृतशशिना प्रसृतामृतपरिस्रुतविंदुना संसिक्तमाद्यं हकाराक्षरं॥ एवं विलोमेन संस्मरन्॥ ० ॥ श्री ॥ ॥

जपांतःफलमाह॥मंत्रीति॥इदानीमग्निमंत्रमुद्धरति॥व्याहृतीति॥उद्धारःस्पष्टः॥ताराद्यःपंचविंशत्यक्षरोऽग्निमंत्रः॥ध्यानमाह॥त्र्यंसासक्तेति॥भावसहस्रेति॥अथ
उद्यद्भानुस्फुरिततडिदाकारमर्द्धांबिकेशं॥पाशाभीतीवरदपरशुंसंदधानंकराब्जैः॥दिव्याकल्पैर्नवमणिमयैःशोभितंविश्वमूलम्
सौम्याग्नेयंवपुरवतुवश्चंद्रचूडंत्रिनेत्रम् ८५ भानुलक्षंजपेन्मंत्रंपायसेनससर्पिषा दशांशंजुहुयात्सम्यक्ततःसिद्धोभवेन्मनुः॥
८६॥दीप्तादिपूजिते पीठेप्रागुक्तेपूजयेद्विभुं॥मूलेनमूर्तिसंकल्प्ययजेदंगादिभिःसह॥८७॥कंठवसुनरवरौदिग्दलेषुविदिक्ष्वथ
र्चयेत्तुनागोजामखाख्याःमद्रिजांपुनः ८८ लोकेश्वरांस्तदस्त्राणिपूजयेद्देवमन्वहं॥अर्घ्यंचविधिवद्दद्यात्प्रागुक्तेनैववर्त्मना॥
८९॥मंत्राद्यमातृकांभोजेपूर्णकुंभंनिधायतं॥पिधायवामहस्तेनन्यस्तमंत्रेणसंयुतः ९०। अष्टोत्तरशतंमंत्रंजपेत्तोयंसुधामयम्।स्मृ
त्वातेनाभिषिंचेद्यःसभवेद्विगतामयः॥ ९१॥आयुरारोग्यविभवानमितान्लभतेनरः।अनेनैवविधानेनविषार्त्तोनिर्विषोभवेत् ९२
बिंदुभ्यांविगलत्सुधापरिवृतेमंत्रोस्यबीजंततः॥प्राच्यांतत्परमाश्रितेनशशिनासंसिक्तमाद्यंस्मरन् ९३॥ मंत्रीमंत्रमिदंजपेद्दिवसग
तेन्मासायमृत्युंज्वरान्जित्वावर्षशतेविशिष्टविभवोजीवेत्सुखंबंधुभिः ९४॥व्याहृतित्रयमग्रेस्याज्जातवेदइहावह॥सर्वकर्माणिसं
साधयस्वाहाग्निप्रियांततः।९५।ताराद्योयंमनुःप्रोक्तःपंचविंशतिवर्णवान्॥ऋषिर्भृगुर्भवेच्छंदोगायत्रंदेवतानलः।९६।विभक्तैः
पंचभिःषड्भिश्चतुर्भिःपंचभिस्त्रिभिः।द्वाभ्यामंगक्रियाप्रोक्तावर्णैर्मूलमनोःक्रमात्॥९७॥त्र्यंसासक्तसुवर्णमाल्यमरुणासक्चंदना
लंकृतंज्वालाकुंचजटाकलापविलसन्मौलिंसुशुक्लांबरं।शक्तिस्वस्तिकदर्भमुष्टिकजपस्रक्स्रुक्स्रुवाभीवरान्दोर्भिर्बिभ्रतमर्चि
तंत्रिनयनंरक्ताभमग्निंभजे॥९८॥गुरोर्लब्ध्वामनुंमंत्रीचतुर्दश्यामुपोषितः।जपेद्भावसहस्राणिशुद्धात्माविजितेंद्रियः ९९। अमावा
स्यादिनेविप्रान्भोजयेन्मधुरोत्तरैः।भक्ष्यैर्भोज्यैर्यथाशक्तिदद्यात्तेभ्योपिदक्षिणाम् १०० ॥९९ रंदिनंप्रतिपदं॥उत्तरोयंग्रंथःस्पष्टार्थः॥ ॥

स्वमंडलांते। अग्निमंडलांते स्वबीजेन रेफेणाग्निं दद्याद्व्याख्यातमपरम्। मंत्रांतरमाह॥ उतिष्ठेत्यादिना निगदव्याख्यातेन ग्रंथेन। भूतैः पंचभिः॥ स्पष्टार्थमपरम्॥
भुक्त्वा स्वयं समानीय होमद्रव्याणि शोधयेत्। अपरं दिनमारभ्य होमं कुर्याद्यतं द्विजः १०१ क्रमाद्दशसमिद्व्रीहितिलाज्यानीह विघृतैः।
प्रत्येकमष्टोत्तरशतं जुहुयाद्दिनशः सुधीः १०२॥ दशाहमेवं निर्वर्त्य विधानेन विधानवित्॥ दत्त्वा पूर्णाहुतिं सम्यगेकादश्यां द्विजोत
मान्॥१०३॥ संपूज्य तर्पयेद्द्विजैर्यथाविभवमादरात्॥ गुरवे दक्षिणां दद्याद्गां पयस्विनीं॥१०४॥ वासांसि धनधान्यादि दत्त्वा सं
प्रीणयेद्गुरुं॥ स्वमंडलांते प्रयजेत्पीठं सनवशक्तिकं १०५॥ पीताश्वेतारुणा कृष्णा धूम्रा तीक्ष्णा स्फुलिंगिनी। रुचिरा ज्वालिनी प्रोक्ताः
कृशानोर्नवशक्तयः १०६ स्वबीजेनासनं स्यान्मूर्तिं मूलेन कल्पयेत्॥ अत्र संपूजयेद्वह्निं विधिना प्रोक्तलक्षणं १०७ अंगपूजा पु
राप्रोक्ता मूर्तीरष्टौ दलेष्विमाः॥ जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः १०८ अश्वोदरजसंज्ञोन्यः पुनर्वैश्वानराह्वयः॥ कौमारते
जाः स्याद्विश्वमुखो देवमुखः परः १०९ अर्च्याः स्वस्तिकशक्तिभ्यां विराजितकरांबुजाः। लोकेशानर्चयेद्बाह्ये वज्राद्यायुधसंयुतान्
११० इति संपूजयेन्नित्यं जपेत्तावत्सहस्रकं। जायते वत्सरादर्वाग्धनधान्यसमृद्धिमान् १११ साज्यमन्नं प्रजुहुयाद्वत्सराल्लभते श्रियं
॥ कुसुमैर्बिल्ववृक्षस्य दधिक्षौद्रघृतप्लुतैः ११२॥ करवीरप्रसूनैर्वा मंडलात्स्यात्समृद्धिमान्। षण्मासं कपिलाज्येन जुहुयाद्वत्सरांत
रे॥११३॥ तस्य संजायते लक्ष्मीः कीर्तिस्त्रैलोक्यवंदिताः॥ शालिभिर्जुहुयान्नित्यं विधिनाष्टोत्तरशतं ११४ व्रीहिगोमहिषान्नाद्यैर्भव
नं तस्य पूर्यते। तिलहोमेन महतीं श्रियमाप्नोति मानवः ११५॥ पलाशबिल्वखदिरशमीदुग्धमहीरुहां॥ विकंकतारग्वधयोः समि
द्भिः करवीरजैः ११६ प्रसूनैः कुमुदैः पद्मैः कह्लारैररुणोत्पलैः। जातीप्रसूनैर्दूर्वाभिर्नित्यमष्टोत्तरशतं ११७ एकेन जुहुयान्मंत्री प्रति
पल्लवैर्वा सुधीः। साधयेदखिलान्कामान्षण्मासान्नात्र संशयः ११८ उत्तिष्ठपुरुषं ब्रूयाद्धरिपिंगल तत्परं। लोहिताक्षपदं देहि मे दद्या

चतुर्विंशत्यक्षरात्मा समृद्धिमनुरीरितः॥ ऋष्यादयः पुरा प्रोक्ताः षड्भूतकरणोस्त्रिभिः १२० चतुर्भिर्युगलेनार्णैर्मूलमंत्रसमुद्भवैः॥ विदधीत
षडंगानि जातियुक्तानि मंत्रवित् १२१ स्वर्णाश्वत्थ विनिर्गतहुतवहं सिंदूरपुंजप्रभं ज्वालाभिर्निचितांगरोमनिचयं कांत्या जगन्मोहनं अम्भाका
रमनर्घ्यरत्नविलसद्भूषालसत्कंधरं रत्नैरिंद्रियनिर्गतैर्वसुमतीमाच्छादयंतं स्मरेत्॥ १२२॥ लक्षमनुं जपेदेनं पयोन्नेन ससर्पिषा॥ दशांशं जु
हुयाद्धूतो तुरगाग्निमनुस्मरन् १२३ पीठप्राग्गीरितेभ्यर्च्चेनदंगैर्मूर्तिभिः सह॥ आशापालैस्ततीयास्त्रैरभ्यर्चेद्धव्यवाहनं। १२४। प्रातःस्नानरतो
मंत्री सहस्रं यो जपेन्मनुं॥ जित्वा रोगान्स जीवेत्तु श्रियावर्षशतं नरः॥ १२५॥ हृन्मात्रे जले स्थित्वा भानुमालोकयसंयतः। चतुःसहस्रं प्रजपे
न्नित्यं संवत्सरावधि १२६ अपमृत्युभयं रोगकृत्यादारिद्र्यसंभवान्॥ जित्वा शान्तिर्जित्यतेजस्वी जीवेद्वर्षशतं सुधीः॥ १२७ कृत्तिकायां प्रतिपदि
शालिहोमो धनप्रदः॥ दभ्राशमीसमिद्भिर्वा प्रतिपत्सु भवेद्धनं। १२८ इत्वा वाप्रिभवेद्राज्यैः पद्मैर्ग्रामं मवाप्नुयात्॥ तैलैर्ज्योतिष्मतीभूतैरिपुराष्ट्रं
जयेन्नृपः १२९ अश्वत्थसमिधो मेषीघृताक्ता जुहुयान्नरः। कन्यामिष्टामवाप्नोति सापितं प्राप्नुयाद्धरं १३० शुद्धाज्येन कृतो होमोऽन्नवस्त्रनाशक
रः परः॥ समाहं जुहुयान्मंत्री वंधूककुसुमैः शुभैः १३१ सार्द्धसहस्रमचिरान्महतीं श्रियमश्नुते॥ मासं क्षीरेण गव्येन क्षीराहारो जितेन्द्रियः
१३२ सहस्रं जुहुयान्मंत्री संपदामधिपो भवेत्॥ आज्याक्तदूर्वाहोमेन जीवेद्वर्षशतं नरः १३३ अष्टोत्तरशतं नित्यं हविषा मृगमुद्रया जुहुतो
जायते लक्ष्मीर्धनधान्यसमृद्धिदा १३४ प्रतिमासं प्रतिपदि जुहुयादष्टतं घृतैः॥ श्रीभवेन्महतीतस्य षण्मासादनपायिनी १३५ अरुणैः स्तत्प
लैः पुत्त्रैर्मधुरत्रयसंयुतैः॥ जुहुयाद्वत्सरादर्वाक्स भवेदिंदिरापतिः १३६ अरुणाब्जैस्त्रिमध्वक्तैर्जुहुयाद्यश्च हं सुधीः सहस्रं वत्सरार्द्धेन भवेद्भू
मिपुरंदरः १३७ वस्त्रं च हुतस्तैः स्याल्लक्ष्मीरिंद्रेणवांछिता॥ जुहुयादमृताखंडैः पयोक्तैः समवासरं १३८ त्रिसहस्रं प्रतिदिनं मंत्रविद्विजितेन्द्रियः
कृत्याद्रोहज्वरोन्मादरोगान्जित्वा निरंतरं। १३९ जीवेद्वर्षशतं भूत्वा तेजसा भास्करप्रभः। करवीरजपाबिल्वपलाशकरपभूरुहाम् १४० प्रसूनैः जु

सौम्यसौरमंत्रानभिधायेदानीं वैष्णवान्वक्तुमारभते॥ अथेत्यादिना॥ मंत्रमुद्धरति॥ तारं प्रणवः। नमः स्वरूपं॥ नरौ दीर्घसमन्वितौ स्वरूपं॥ पवनो यकारः॥ णाय स्वरूपं। अ
ष्टाक्षरो मंत्रः। अक्षरन्यासस्थानान्याह॥ आधारेत्यादिना॥ आधारहृदयबाहुबाहुमूलदृग्नाभिषु॥ एको न्यासः। कंठनाभिहृदिकुचद्वयपार्श्वपृष्ठ एकः। मूर्द्धादिष्व

अश्नुयान्महतीं लक्ष्मीं वत्सराद्वाञ्छिताधिकां॥ आदाय तंडुलप्रस्थं निर्मलं साधुशोधितं १४२ गोदुग्धेन हविः कृत्वा कवलेतेन कल्पयेत्॥
आज्याक्तं तत्समादाय पूजिते हव्यवाहने १४३ गंधमाल्यादिभिः सम्यक् जपित्वाष्टोत्तरं शतं। जुहुयात्प्रतिपत्स्वग्निं ध्यात्वा तु रमाविभुं।
१४४ जायते वत्सरादेव लक्ष्मीस्त्रैलोक्यमोहिनी॥ मंत्रेणानेन संजप्तां वचां खादेद्दिनागमे १४५ भारती निवसेत्तस्य मुखांभोजेऽतिनिश्चला।
अष्टोत्तरशतं जप्तं जलं प्रातः पिबेन्नरः १४६ जठराग्निर्ज्वलेत्तस्य घृतेनैव हुताशनः। कृत्वा नवपदात्मानं मंडले प्रागुदीरितं १४७ कलशा
न्नवकल्याणान्स्थापयेत्प्रोक्तवर्त्मना। क्षीरवृक्षसमुद्भूतैः क्वाथैस्तान्पूरयेत्क्रमात् १४८ वस्त्रादिभिरलंकृत्य नवरत्नानि निःक्षिपेत्
॥ मध्ये संपूजयेदग्निं मूर्तीरष्टौ दिशां क्रमात् १४९ कुंभेषु धूपदीपाद्यैः पुष्पगंधैर्मनोहरैः। स्पृष्ट्वा जपेत्ततः कुंभं मंत्रमष्टोत्तरं शतम् १५०
अभिषिंचेत्ततः साध्यं विनीते दत्तदक्षिणं। ज्वरग्रहमहारोगदारिद्र्यादीन्विजित्य सः १५१ जीवेद्वर्षशतं सम्यगभिषिक्तः श्रिया सह १५१
॥ इति शारदातिलके चतुर्दशः पटलः॥ १४॥ अथ वक्ष्ये महामंत्रान्विष्णोः सर्वार्थसाधकान्। येषां संस्मरणात्संतो भवाब्धेः पारमाश्रिताः १
तारं नमः पदं पश्चान्नरौ दीर्घसमन्वितौ। पवनो णाय मंत्रोऽयं प्रोक्तो वस्वक्षरात्मकः २ साध्यो नारायणः प्रोक्तो मुनिश्छंद उदाहृतम्। मंत्रस्य
देवी गायत्री देवता विष्णुरव्ययः ३ क्रुद्धोल्काय हृदाख्यातं महोल्काय शिरः स्मृतं। वीरोल्काय शिखा प्रोक्ता द्युल्काय कवचं मतम् ४।
सहस्रोल्कायास्त्रमुक्तमंगक्लृप्तिरियं मता। भूयो वर्णैर्मनोः षड्भिः षडंगानि समाचरेत् ५ अवशिष्टौ पुनर्वर्णौ विन्यसेत्कुक्षिपृष्ठयोः। व
द्धदिज्ञः क्रमान्मंत्रेशो मंत्रवर्णांस्ततो न्यसेत् ६ आधारे हृदये वक्त्रे दोःपन्मूलेषु नाभिषु। कंठे नाभौ हृदि कुचे पार्श्वपृष्ठेषु तत्परम्॥ ७॥ ॥

णां तेषु कः। बाहुद्वये पादद्वये च पंचांगुलिष्वेकः। त्वगादिसप्तधातुषु प्राणे चैकः सह एव कर्तव्यः। मूर्द्धादृक्श्रोत्रनासास्याहा कुक्षिसोरुजानुजंघापदद्वये च एकः। गंडयो
रंसयोरुर्वोः वक्त्रस्थाने शंखस्थाने अंभोजस्थाने चेत्यर्थः। द्वादशस्थानेषु द्वादशाक्षरमंत्रन्यासं वक्तुं द्वादशाक्षरमंत्रं स्तौति। अष्टार्णेत्यादिना। अपमर्षः॥

द्वादशाक्षरमंत्रवर्णान्याससमयेश्रीमदष्टाक्षरमंत्रमप्यप्रकृत्यात्मनासंचिंत्य एतस्माच्चतुरात्मकं च वासुदेवसंकर्षणप्रद्युम्नानिरुद्धात्मकं ॥ आत्मांतरात्मपरमात्मविज्ञानात्मनां च संयोगाद्द्वादशाक्षरमंत्रस्सोत्पतिरितिसंचिंत्य। द्वादशवर्णा द्वादशस्वरद्वादशादित्यसहिताः। केशवादिद्वादशमूर्तीर्देहे वक्ष्यमाणस्थानेषु वक्ष्यमाणक्रमेण विन्यसेदिति॥ स्थानानि च तत्क्रमं च दर्शयति॥ ललाटेत्यादिना॥ अयमत्र निगूढः। ललाटे ॐ अं धातासहिताय केशवाय नमः। कुक्षौ नं आं अ

मूर्द्धास्यनेत्रश्रवणघ्राणेषु तदनंतरम्॥ दोःपादसंध्यंगुलिषु धातुप्राणेषु हृत्तले॥ ८॥ मूर्द्धे स्मरणास्य हृत्कुक्षिशोरुजंघापदद्वये॥ एकैकशो न्यसेद्वर्णान् गदांसोरुपदेषु च॥ ९॥ चक्रशंखगदांभोजं पदेष्ववहितो न्यसेत्। अष्टाक्षरमप्रकृत्यात्मा ज्ञेयोऽसौ चतुरात्मनां॥ १० संयोगात्सूरिभिःप्रोक्तो विशिष्टो द्वादशाक्षरः॥ अतस्तन्मंत्रवर्णाश्च द्वादशस्वरसंयुताः ११ द्वादशादित्यसहिता मूर्तीर्द्वादश विन्यसेत्॥ केशवाद्याः क्रमाद्देहे वक्ष्यमाणविधानतः॥ १२॥ ललाटे केशवं धात्रा कुक्षौ नारायणं पुनः॥ अर्यम्णा हृदि मित्रेण माधवं कंठदेशतः॥ १३॥ वारुणेन च गोविन्दं पुनर्दक्षिणपार्श्वके। अंशुना विष्णुमंसस्थं भगेन मधुसूदनं १४ गले विवस्वता युक्तं त्रिविक्रममनंतरं॥ वामपार्श्वस्थमिन्द्रेण वामनाख्यमथांसके १५॥ पूष्णा श्रीधरनामानं गले पर्ज्जन्यसंयुतं॥ हृषीकेशं हृद्यंपृष्ठे पद्मनाभं ततः परं॥ १६॥ त्वष्ट्रा दामोदरं पश्चाद्विष्णुना ककुदि न्यसेत्॥ द्वादशार्णं महामंत्रं ततो मूर्द्ध्नि प्रविन्यसेत्॥ १७॥ पुनः किरीटमंत्रेण व्यापकं विन्यसेत्ततः॥ भूयात्किरीटकेयूरहारमकरकुंडलं १८ शंखचक्रगदांभोजहस्तं पीतांबरंधरं॥ श्रीवत्सांकितवक्षोतंस्य समर्च्यस्मरेत् १९ श्रीभूमिसहितं स्वात्मज्योतिर्द्ध्येयमदीरयेत्॥ पश्चाद्दीप्तिकरायेति सहस्रादित्यतेजसे ॥२०॥

यं मासहिताय नारायणाय। हृदि मों रं मित्रसहिताय माधवाय। कंठे भं ईं वरुणसहिताय गोविंदाय दक्षिणपार्श्वे गं उं अंशुसहिताय विष्णवे दक्षिणांसे वं ऊं भगसहिताय मधुसूदनाय स्वन्यत्रापि ऊहनीये। ककुदि च परगले। ततः समस्तद्वादशाक्षरमंत्रं मूर्द्ध्नि विन्यसेत् किरीटमंत्रोद्धारः स्पष्टः ॥ विकारलक्षं पोदशानसे ॥ ॥ ॥

पीठमंत्रोद्धारोपिसुगमः॥ वासुदेवादीनांशक्तीर्दर्शयति॥ शांतिरित्यादिना॥ विष्णोःसायुज्यमाप्नुयादित्यंतोग्रंथःस्पष्टार्थः॥ यंत्रमुद्धरति॥ अष्टदलंकर्णिकायां
षट्कोणांतर्दंतःप्रणवंतन्मध्येसाध्यनामगर्भितंषट्कोणेसुदर्शनंषडक्षरं॥ अष्टदलेऽष्टाक्षराणि॥ मूलमंत्रस्यदलाग्रेषुश्रीकाराष्टाक्षराणिवहिर्द्वादशदलेद्वादश

नमोंतःप्रणवाद्योयंकिरीटमनुरीरितः॥ एवंन्यासंतनौकृत्वाध्यायेन्नारायणंपरम् २१ उद्यत्कोटिदिवाकराभमनिशंशंखंगदांपंकजंच
क्रंबिभ्रतमिंदिरावसुमतीसंशोभिपार्श्वद्वयं॥ कोटीरांगदहारकुंडलधरंपीतांबरंकौस्तुभोद्दीप्तंविश्वधरंस्ववक्षसिलसच्छ्रीवत्स
चिह्नंभजे॥२२॥ विकारलक्षंप्रजपेन्मंत्रमेनंसमाहितः॥ तद्दशांशंसरसिजैर्जुहुयान्मधुराप्लुतैः २३ पीठेसंपूजयेद्देवंविमलादिस
मन्विते॥ विमलोत्कर्षिणीज्ञानाक्रियायोगाततःपरं २४ प्रह्वीसत्यातथेशानानुग्रहानवमीतथा॥ नमोभगवतेब्रूयाद्विष्णवेचपदं
वदेत् २५ सर्वभूतात्मनेवासुदेवायेतिवदेततः॥ सर्वात्मपदसंयोगायोगपद्मपदंपुनः २६ पीठात्मनेहृदंतोयंमंत्रस्तारादिरीरितः॥
दत्वानेनासनंमंत्रीमूर्तिंमूलेनकल्पयेत्॥२७॥ आवाह्यपूजयेद्देवंसुगंधिकुसुमादिभिः॥ अंगान्यभ्यर्च्यमंत्राणांकेसरेषुसमर्चये
त् २८ दलेषुवासुदेवाद्यामूर्तीःशक्तिसमन्विताः॥ वासुदेवंसंकर्षणंप्रद्युम्नमनिरुद्धकं। २९॥ हेमपीततमालेन्द्रनीलाभान्पीतवा
ससः॥ शंखचक्रगदांभोजधरानेतांश्चतुर्भुजान् ३० शांतिंश्रियंसरस्वत्यारतिंकोणदलेष्विमाः॥ श्वेतकांचनगोदुग्धदूर्वावर्णाः
सुभूषिताः ३१ एतानर्चेद्दलाग्रेषुशंखचक्रगदांबुजे॥ कौस्तुभंमुसलंखड्गंवनमालांयथाक्रमं॥ ३२ रक्ताच्छपीतकनकश्या
मकृष्णासितपांडुरान्। वहिस्थेसमभ्यर्चेद्गरुडंकुंकुमप्रभं ३३ मुक्तामाणिक्यसंकाशौदक्षिणोत्तरतोनिधी॥ ध्वजंवरुणदिग्भा
गेश्यामलंपूजयेत्ततः ३४ ॥ ९९ स्वरवर्णान्वहिर्द्वात्रिंशद्दलंतस्मिन्नृसिंहाष्टुभवर्णान्विलिख्यवहिर्नृसिंहाक्षरयुतवृत्तं। एतद्यंत्रं
जपहोमसमस्तसंपद्वैष्णवंद्वादशवर्णमेवमुद्धरति॥ प्रणवोहृदित्यादिना॥ ॥ ० ॥ ॥

उद्धारः स्पष्टः ॥ द्वादशाक्षरन्यासस्थानान्याह ॥ मूर्द्धीति ॥ दृशोः एकैकनक्षरं ॥ बाह्वोरेकं ॥ जानुद्वयेप्येकं ॥ पादद्वयेपि ॥ ध्यानमाह ॥ विष्णुमिति ॥ वैष्णवं चतु
र्दशाक्षरमंत्रमुद्धरति ॥ हृत्खे खेत्यादिना ॥ स्पष्टार्थेनमंथेन ॥ ध्यानमाह ॥ विद्युदिति ॥ कमलजा लक्ष्मीः ॥ वैकुंठे वासुदेवः । विद्यापुस्तकं वासुदेवलक्ष्म्यो रे

अरुणं विघ्नमाग्नेये श्यामं मार्यं निशाचरे ॥ श्यामां दुर्गां वायुकोणे सेनान्यं पीतमीश्वरे ३५ इन्द्रादीन्पूजयेत्पश्चाद्वज्राद्यायुधसंयुतान्
॥ इति संपूजयेद्विष्णुं प्रोक्तैरावरणैः सह ३६ धर्मार्थकामानासाद्य वै विष्णोः सायुज्यमाप्नुयात् ॥ प्रणवो हृद्भगवते वासुदेवाय कीर्ति
तः ३७ प्रधानो वैष्णवे तंत्रे मंत्रो पं द्वादशाक्षरः ॥ ऋषिः प्रजापतिश्छंदो गायत्री परिकीर्तिता ३८ देवतास्य मनोः प्रोक्ता वासु
देवो मनीषिभिः । तारेण हृदयं प्रोक्तं नमसा शिर ईरितं ३९ चतुर्वर्णैः शिखा प्रोक्ता पंचार्णैः कवचं मतं ॥ समस्तेन भवेदस्त्रमंग
कल्पनमीरितं ४० मूर्द्धि भाले दृशोरास्ये गले दोर्हृदयांबुजे ॥ कुक्षौ नाभौ ध्वजे जानुद्वये पादद्वये तथा ४१ विष्णुं शारदचंद्र
कोटिसदृशं शंखं रथांगं गदामंभोजं दधतं सिताब्जनिलयं कांत्या जगन्मोहनं ॥ आबद्धांगदहारकुंडलमहामौलिं स्फुरत्कं
कणं श्रीवत्सांकमुदारकौस्तुभधरं वंदे मुनींद्रैः स्तुतम् ४२ वर्णलक्षं जपेन्मंत्रं दीक्षितो विजितेन्द्रियः तत्सहस्रं प्रजुहुयात्तिलै
राज्यपरिप्लुतैः ४३ पीठे प्रागीरिते मूर्तिं मूलमंत्रेण कल्पयेत् ॥ पूजयेद्विधिनानेन वासुदेवं विधानवित् । ४४ । प्रथमावृतिरंगैः
स्याद्वासुदेवादिभिः परा ॥ शांत्यादिशक्तिसहितैः परा द्वादशमूर्तिभिः ४५ चतुर्थी सुरनाथाद्यैर्वज्राद्यैः पंचमी मता ॥ एवं संपू
जितो विष्णुः प्रदद्यादिष्टमात्मनः ४६ पायसेन घृताक्तेन मंत्रवर्णसहस्रकम् ॥ ९९ कर्तांसा प्रांशुं वपुरमितांघ्रिपंकः इत्यादिना । अक्षर
न्यासमाह ॥ मूर्द्धीति ॥ श्रोत्रयोर्हृतात्वौ द्वौ गुणाल लक्षलक्षन्नितयं ॥ तद्देव ॥ गजानष्टौ ऐरावतादीन् पंत्रमुद्धरति १ ससाध्यमिति ॥ अत्रपत्रं पद्मे लि
खित्वा तत्कर्णिकायां प्रणवं तन्मध्ये साध्याख्यां लिखित्वा तारेण द्वादशाक्षरैः उपशोभितके सरं पत्रमध्ये प्रधानमंत्राक्षरद्वंद्वमवशिष्टा ॥ ॥

जुहुयान्मानवः सिद्ध्यै समिद्भिः क्षीरभूरुहां ४७ तत्संख्यपापपोताभिः सर्वपापविमुक्तये॥ हृल्लेखाबीजयुगलं रमाबीजयुगं ततः ४८ ल
क्ष्म्यै ते वासुदेवाय हृदंतः प्रणवादिकः॥ चतुर्दशाक्षरैः प्रोक्तो मंत्रोयं सुरपादपः॥४९॥ हृदयं शक्तिबीजाभ्यां रमाभ्यां शिर ईरितं॥ लक्ष्म्या
प्रोक्ता शिखा वर्म वासुदेवाय ईरितं॥५०॥ नमसास्त्रं समादिष्टं सर्वतारादि कल्पयेत्॥ विद्युच्चंद्रनिभं वपुः कमलजा वैकुंठयो रेकतां प्रा
प्तं स्नेहवशेन रत्नविलसद्भूषाभरालंकृतं॥ विद्यां पंकजदर्पणान्मणिमयं कुंभं सरोजं गदां शंखं चक्रममूनि बिभ्रदमितां दिश्यात्श्रियं
वः सदा॥५२॥ वर्णलक्षं जपेदेनं तत्सहस्रं सरोरुहैः होमं कुर्याद्विकसितैर्मधुरत्रयसंयुतैः ५३ पूजास्याद्वैष्णवे पीठे द्वादशाक्षरवर्त्म
ना॥ पायसेन कृतो होमो लक्ष्मीवश्यप्रदायकः॥५४॥ मधुराक्तैस्तिलैर्हुत्वा सर्वकार्याणि साधयेत्॥ तारो हृद्विष्णवे पश्चात् ङेंऽतः सुर
पतिर्भवेत्॥५५॥ महाबलाय ठद्वंद्वं मनुरष्टादशाक्षरः॥ ऋषिरिंद्रो विराट्छंदो देवता दधिवामनः॥५६॥ हृदेकेन शिरो द्वाभ्यां शिखा
त्रिभिरुदाहृता॥ कवचं पंचभिः प्रोक्तं नेत्रं तावद्भिरक्षरैः॥५७॥ द्वाभ्यामस्त्रमिति प्रोक्तः प्रकारोंगस्य सूरिभिः॥ मूर्द्धि भाले दृशोर्युग्मे क
र्णनासोष्ठतालुषु॥५८॥ कंठे बाहुद्वये पृष्ठे हृदयोदरनाभिषु॥ गुल्फोरुजानुयुग्मेषु जंघयोः पादयोर्न्यसेत्॥५९॥ अष्टादशमनोर्वर्णा
न्न्यस्याद्देवं विचिंतयेत्॥ मुक्तागौरं नवमणिलसद्भूषणं चंद्रसंस्थं॥ भृंगाकारैरलकनिकरैः शोभिवक्त्रारविंदं॥ हस्ताब्जाभ्यां कनक
कलशं शुद्धतोयाभिपूर्णं दध्यन्नाढ्यं कनकचषकं धारयंतं भजामः॥६०॥ गुणलक्षं जपेन्मंत्रं तद्दशांशं घृतप्लुतैः॥ पायसान्नैः प्र
जुहुयाद्दध्यन्नैर्वा यथाविधि॥६१॥ चंद्रांतकल्पिते पीठे प्रागुक्ते तं समर्चयेत्॥ मूर्तिं मूलेन संकल्प्य वक्ष्यमाणविधानतः॥६२॥
षडंगानि समभ्यर्च्य केसरेषु यथापुरा॥ अभ्यर्च्य वासुदेवादीन्ध्वजादीनर्चयेत्ततः॥६३॥ ध्वजं च वैनतेयं च कौस्तुभं वनमा ॥
॥ लिकां॥ शंखं चक्रं गदां शार्ङ्गं दलेष्वष्टसु पूजयेत्॥६४॥

ऋष्यादीनाह॥ गायत्र्या इति॥ इदानीं शिरसोपि तानाह॥ शिरस इति॥ व्याहृतिन्यासस्थानान्याह॥ हृन्मुखेति॥ गायत्र्यक्षरन्यासस्थानान्याह॥ तत्संधिष्विति॥ प
दन्यासस्थानान्याह॥ शिरोभ्रूमध्य इति॥ ॐ आपो ज्योतिरिति शिरः शिरसि न्यसेत्॥ षडंगमंत्रानाह॥ इति पदन्यासस्थानान्याह॥ शिरो घेह सप्तव्याहृतिसंयुतमिति

विश्वामित्रवसिष्ठाख्यो व्याहृतीनामृषीन्विदुः॥ गायत्र्युष्णिगथानुष्टुब्बृहती पंक्तयः पुनः ५ त्रिष्टुप्जगत्यौ छंदांसि कथितानि मनी
षिभिः॥ सप्तार्चिरनिलः सूर्यो वाक्पतिर्वरुणो वृषः ६ विश्वेदेवाः क्रमादासां देवताः परिकीर्तिताः॥ गायत्र्या मुनिराख्यातो विश्वामि
त्रो महाद्युतिः ७ गायत्री छंद इत्युक्तं देवता सविता स्मृता॥ शिरसोस्य मुनिर्ब्रह्मा छंदो देव्यादिका स्मृता॥ ८॥ गायत्री परमात्मास्य दे
वता कथिता बुधैः॥ व्याहृतीः सप्त भूराद्या हृन्मुखांसोरुयुग्मके ९ जठरे न्यस्य मंत्रज्ञो गायत्र्यर्णास्ततो न्यसेत्। यत्संधिषु ध्वजे ना
भौ हृत्कंठभुजसंधिषु॥ १०॥ आस्यनासाकपोलाक्षिकर्णभ्रूमस्तके पुनः। पाश्चात्योत्तरयाम्यप्रागूर्ध्ववक्त्रेषु साधकः ११ पदानि दश
विन्यस्येदेषु स्थानेषु मंत्रवित्॥ शिरोभ्रूमध्यदृग्वक्त्रकंठहृन्नाभिगुह्यके॥ १२॥ जानुनः पादयोर्युग्मे तच्छिरः शिरसि न्यसेत्॥ हृद
यं ब्रह्मणे प्रोक्तं विष्णवे शिर ईरितं॥ १३॥ शिखा रुद्राय कवचमीश्वराय समीरितं॥ नेत्रं सदाशिवायोक्तमस्त्रं सर्वात्मने स्मृतम्। १४।
षडंगान्येवमुक्तानि यथास्थानं प्रविन्यसेत्॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिंदुनिबद्धरत्नमुकुटां तत्त्वात्म
वर्णात्मिकां॥ सावित्रीं वरदाभयांकुशकशाः पाशं कपालं गुणं शंखं चक्रमथारविंदयुगलं हस्तैर्वहंतीं भजे १६ प्राणायामान्पुरा
कृत्वा गायत्रीं संध्ययोर्जपेत्॥ सप्तव्याहृतिसंयुक्तां गायत्रीं शिरसान्वितां॥ १७॥ त्रिरुच्चरन्धिया प्राणान्धारयेद्यतमानसः॥ प्रा
णायामो यमाख्यातः समस्तदुरितापहः १८॥

गायत्रीमंत्रजपब्राह्मण इत्यादिना॥ ध्यानमाह मुक्तेति॥ तत्त्ववर्णान् चतुर्विंशतिवर्णान्॥ प्राणा ॥
श्रूलं प्राणायामलक्षणमाह॥ सप्तव्याहृतिसंयुक्तमिति॥ गायत्रीमंत्रजपप्रकारमाह॥

शा·ति· व्याहृति त्रयमिति॥ पूजाप्रकारमाह॥ विधायमंडलमित्यादिना॥ त्रिकोणेषु ब्रह्माद्याः शक्तयः। ब्रह्मविष्णुईशाः शक्तयः। गायत्रीसावित्रीसरस्वत्यः तत्वसंख्य
टी·ग्र· यासहस्राणि चतुर्विंशतिसहस्राणि॥ स्पष्टार्थमपरं॥ आग्नेयमंत्रमुद्धरति॥ अथाभिधास्य इति॥ मंत्रऋग्यजुर्वेदे स्पष्टः॥ जातवेदसेसुनवाममरातीयतो नि
११

व्याहृतित्रयसंयुक्तां गायत्रीं दीक्षितो जपेत्॥ तत्वलक्षं विधानेन भिक्षाशी विजितेंद्रियः १९ क्षीरौदनतिलान्दूर्वाक्षीरद्रुमसमि
द्वरान्॥ पृथक्सहस्रत्रितयं जुहुयान्मंत्रसिद्धये २० विधाय मंडलं विद्वान्त्रिकोणोज्वलकर्णिकां॥ सौरं पीठं यजेत्तत्र दीप्तादि
नवशक्तिभिः २१ मूलमंत्रेण क्लृप्तायां मूर्तौ देवीं प्रपूजयेत्॥ कोणेषु त्रिषु संपूज्या ब्रह्माद्याः शक्तयो बहिः २२ आदित्याद्यास्ततः पू
ज्या उषादिसहिताः क्रमात्॥ ततः षडंगान्यभ्यर्च्य केसरेषु यथाविधि ॥२३॥ प्रह्लादिनीं प्रभां पश्चान्नित्यां विश्वंभरां पुनः॥ वि
शालिनी प्रभावत्यौ जयां शांतिं यजेत्पुनः २४ कांतिं दुर्गां सरस्वत्यौ विश्वरूपां ततः परां॥ विशालासंज्ञितामीशां व्यापिनीं विमलां
यजेत् २५ तमोपहारिणीं सूक्ष्मां विश्वयोनिं जयावहां॥ पद्मालयां परां शोभां पद्मरूपां ततोर्चयेत् २६ ब्राह्म्याद्याः सारुणाद्यास्ते
पूजयेत्प्रोक्तलक्षणाः॥ ततोर्चयेद्ग्रहान्बाह्ये शक्रादीनायुधैः सह॥ २७॥ इत्थमावरणैर्देवीं दशभिः परिपूजयेत्॥ धर्मार्थका
ममोक्षाणां भोक्ता स्याद्द्विजसत्तमः २८ तत्वसंख्यासहस्राणि मंत्रविज्जुहुयात्तिलैः॥ सर्वपापविनिर्मुक्तो दीर्घमायुः स विंदति
२९ आयुषे साज्यहविषा केवलेनाथ सर्पिषा॥ दूर्वात्रिकैस्तिलैर्मंत्री जुहुयात्त्रिसहस्रकं ३० अरुणाब्जैस्त्रिमध्वक्तैर्जुहुयाद्भूपतं
नतः॥ महालक्ष्मीर्भवेत्तस्य षण्मासान्नात्र संशयः ३१ ब्रह्मश्रिये प्रजुहुयात्प्रसूनैर्ब्रह्मवृक्षजैः॥ बहुनाकिमिहोक्तेन यथाव
त्साधुसाधिता॥३२॥ १९ इहातिवेदः॥ सनः पर्षदतिदुर्गाणि विश्वानावेव सिंधुं दुरितात्यग्निः इत्यादिना॥ तस्य मूलादिनिरूपयति॥ मरीचीरित्यादिना॥
अक्षरन्यासमाह॥ अंगुष्ठेत्यादिना अंगुलिं अपबाहुषु बाहुमूलकूर्परमध्यभागेषु प्रकोष्ठे षु बाहुमध्यसंधिमणिबंधः॥ मध्यदेशेषु मणिबंधः अंगुष्ठमूलप्र
राम·
११

प्रदेशः मस्तिष्कत्वंदुपरितनभागः॥मूर्द्धातदुपरिद्वादशांतशिखेमंत्रप्रदेशः॥पदन्यासस्थानान्याह॥शिखाललाटेत्यादिना॥ध्यानमाह॥विद्युद्दामेत्यादिना॥मृ
गपतिः सिंहः॥करवालः खड्गः। विशिखा बाणाः॥गुणं त्रिशूलं। पूजाप्रकारमाह॥मंडलइति उक्तेन पूर्वोक्तेन नवसिंहमंत्रेण। मूर्तयः प्रदर्शयति। जातवेदइत्यादि

द्विजन्मनामियंविद्यासिद्धाकामदुघामता।ॐजातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः।सनःपर्षदतिदुर्गाणिविश्वा
नावेवसिंधुंदुरितात्यग्निः॥३४॥आग्नेयमभिधास्यामिमंत्रंसर्वार्थसाधकं॥मारीचिःकाश्यपःप्रोक्तोमुनिरस्यमुहुर्मनोः॥३५॥
त्रिष्टुप्छन्दोदेवतात्रजातवेदोग्निरीरितः॥नवभिःसप्तभिःषड्भिःसप्तभिःपुनरष्टभिः॥३६॥सप्तभिर्मूलमन्त्रार्णैःषडंगविधिरीरि
तः॥अंगुष्ठगुल्फजंघासुजानुनोरूरुयुग्मके ३७॥कट्यंधुनाभिषुहृदिस्तनयोःपार्श्वयोर्द्वयोः॥पृष्ठतःस्कंधयोर्मध्येबाहुमूलोप
बाहुषु ३८ प्रकोर्परप्रकोष्ठेषुमणिवंधतलेषुच॥मुखनासाक्षिकर्णेषुमस्तमस्तिकमूर्द्धसु ३९।क्रमेणविन्यसेद्वर्णान्मंत्रीमंत्र
समुद्भवान् शिखाललाटनयनकर्णोष्ठरसनास्वथ॥४०॥सकंठबाहुहृत्कुक्षिकटिगुह्योरुजानुषु॥जंघयोःपादयोर्न्यस्येत्पदा
न्यस्यमनोःसुधीः ४१ विद्युद्दामसमप्रभांमृगपतिस्कंधस्थितांभीषणांकन्याभिःकरवालखेटविलसद्धस्ताभिरासेवितां।हस्तै
श्चक्रगदासिखेटविशिखांश्चापांकुशं तर्जनींविभ्राणामनलात्मिकांशशिधरांदुर्गांत्रिनेत्रांस्मरेत्।४२। मंत्रवर्णसहस्राणि
जपेन्मंत्रंविशालधीः॥तदंतेतिलसिद्धार्थमिश्रमूलैःसमिद्वरैः ४४ क्षीरद्रुमाणामाज्येनहविषान्नेघृतान्वितैः॥चतुश्चत्वारिंश
दाढ्यंचतुःशतसमन्वितम्॥४५॥चतुःसहस्रंजुहुयादर्चितेहव्यवाहने॥मंडलेसर्वतोभद्रेषट्कोणांकितकर्णिके॥४६।

९९ नाउकम

कारेणपृथिव्यादिपंचभूतानिदिक्षुपूजयित्वेति॥दिक्षुतत्कलानिवृत्याद्याः॥पूजयित्वापुनःपूर्वविधिस्यथाक्रमंवक्ष्यमाणजात्यतादिशःक्रमःपूज्याः।
कथंएकादशेकादशप्रतिदिशां॥आग्नेयेति॥एतदेवजातवेदसमंत्रंप्रतिलोमेनपठितंआग्नेयमुच्यते॥ध्यानभेदा॥उर्वीदेशादिति।ततःप्रयोगसमयएव

शा॰ति॰ टी॰पू॰ १०० ॥इतिपूर्ववज्रपञ्जुग्भिः॥अनुलोमजपसंख्यैवास्येति॥सर्वत्रऐकःकुर्यात्॥गायत्र्यात्रिगुणमिति॥यत्रयत्रमंत्रजपहोमप्रयोगादौतद्देहमंत्रजपात्त्रिगुणि

विधिनावक्ष्यमाणेनपीठंदेव्याःप्रपूजयेत्।जयाख्यांविजयांभद्रांभद्रकालीमनंतरं ४७ सुमुखींदुर्मुखीसंज्ञांपश्चाद्व्याघ्रमु
खींपुनः॥अथसिंहमुखींदुर्गांनवशक्तीःप्रपूजयेत् ४८ आसनंसिंहमंत्रेणदद्यादुक्तेनदेशिकः।मूर्तिसंकल्प्यमूलेनतस्यामावाह्य
पूजयेत् ४९ षडंगानियथापूर्वंकेसरेष्वर्चयेत्सुधीः।ग्न्यादिपात्राष्टकोत्पन्नामूर्तयोर्च्यावहिःपुनः ५० जातवेदाःसप्तजिह्वो
हव्यवाहनसंज्ञकः॥अश्वोदरजसंज्ञोन्यःपुनर्वैश्वानराह्वयः ५१ कौमारतेजाःस्याद्विश्वमुखोदेवमुखःस्मृतः।ततोभूस्वलि
लाग्नीरन्नात्मनेतान्नमोन्वितान् ५२॥चतुर्दिक्षुसमभ्यर्च्यत्कोणेषुतत्कलाःपुनः॥पूर्वादिदिक्षुसंपूज्यायाम्याद्यावर्णशक्तयः
५३ जायतातपनीवेदगर्भादहनरूपिणी॥सेंदुखंडाशुंभहंत्रीनभश्चारिण्यनंतरं ५४ वागीश्वरीमदवहासोमरूपामनोजवा।
मरुद्वेगारात्रिसंज्ञातीव्रकोपायशोवती ५५ तोयात्मिकापुनर्नित्यादयावत्यपिहारिणी।तिरस्क्रियावेदमातातत्परामदनप्रिया
५६ समाराध्यनंदिनीचपरारिपुविमर्दिनी।षष्ठीचदंडिनीतिग्मादुर्गागायत्र्यनंतरं ५७ निरवद्याविशालाक्षीश्वासोद्वाहत्वना
दिनी।वेदनावह्निगर्भाख्यासिंहवाहाहुपातथा ५८ धुर्यादुर्विषहापश्चाद्गिरंसातापहारिणी।त्यक्तदोषानिस्सपत्नाचत्वारिंश
च्चतुर्युता।५९।लोकपालांस्ततोभ्यर्चेद्वज्राद्यायुधसंयुतान्॥इत्थंजपादिभिःसिद्धेमंत्रेस्मिन्साधकोत्तमः ६० आग्नेयास्त्राधि
कारीस्यात्तद्विधानमुदीर्यते॥आग्नेयास्त्रमितिप्रोक्तंविलोमपठितोमनुः।६१॥

तंगायत्रीजपात्कामेद्दान्तीपादभेदं॥अक्षन्नेअभ्यासे राम॰ १००
त्॥आसुरेणयुंजीत।देवक्षेत्रेउपसंहरेत्॥दैवेमनुष्यराक्षसभेदेननक्षत्रभेदंदर्शयतिश्रवोत्तरइत्यादिना।अत्राभ्यांप्रयोगोपसंहाराणांतिथिवारराशिन्यि

प्रतिलोमक्रमादस्य षडंगानि प्रकल्पयेत् ॥ ६२ ॥ वर्णन्यासपदन्यासौ विदध्यात्प्रतिलोमतः
पूर्वोक्ता एवमुत्पाद्या मंत्रस्यास्य प्रकीर्तिताः ॥ प्रतिलोमक्रमादस्य षडंगानि प्रकल्प्यपेत् ॥ पंचगव्यस्व पञ्चेन्नचरुणा तस्य सिद्धये
ध्यानभेदान्विजानीयाद्गुर्वादेशान्नचान्यथा ६३ पूर्ववज्जपक्लृप्तिः स्याज्जुहुयात्पूर्वसंख्यया ॥ पंचगव्यस्व पञ्चेन्नचरुणा तस्य सिद्धये
॥ ६४ ॥ अर्चनं पूर्ववत्कुर्याच्छक्तिस्तु प्रतिलोमतः ॥ सर्वत्र देशिकः कुर्याज्जपन्यासादिगर्गांजपं ६५ क्रूरकर्माणि कुर्वीत प्रतिलोमविधानतः
शांतिकं पौष्टिकं कर्म कर्तव्यमनुलोमतः ॥ प्रयोगकाले प्रजपेदष्टौ पादान्विलोमतः ॥ साधितो जायते पश्चान्मन्त्रोपं विधिनामुना ॥ आ
द्यः पंचाक्षरः पादो ज्ञेयो ज्ञानेंद्रियात्मकः ६७ धुमाद्यः पचवर्णोन्यः स्मृतः कर्मेंद्रियात्मकः ॥ म्याद्यस्तृतीयः पंचार्णः पंचभूतमयः
स्मृतः ६८ त्याद्यः सप्ताक्षरः पादश्चतुर्थो धातुरूपकः ॥ दः पूर्वः पंचमः पादस्तूर्मीरूपः षडक्षरः ६९ तो वर्णादिः षडर्णोन्यः षाड्कौशिक
मयो मतः ॥ सो पूर्वः पंचवर्णोन्यः शब्दादिमय ईरितः ७० ॥ सेवर्णाद्यष्टमो ज्ञेयः पंचार्णो वचनादिकः ॥ एवं तत्वसमायोगात्पादक्लृप्ति
रितीरिता ७१ तत्तत्पदाक्षरोत्पन्ना स्तावंत्यो वह्निदेवताः ॥ प्रधानमूर्तिप्रतिमाः स्वस्ववर्णोदितप्रभाः ७२ ॥ प्रज्वलत्केशवदनाभीमदं
ष्ट्राभयानकाः ॥ देवतारंद्रियोत्पन्ना ऊर्ध्वदृष्ट्य ईरिताः ७३ देवताभूतपादोत्थास्तिर्यक्वक्त्राः प्रकीर्तिताः ॥ धातुरूपाक्षरोद्भूता उभ
यानन शोभिताः ७४ ॥ ऊर्मिजा ऊर्ध्ववदना कोशोत्थास्तिर्यगाननाः ॥ एताः सर्वाः स्मृताः क्लीवा रंद्रियार्थोद्भवास्त्रियः ७५ अधः स्तिर्य
ङ्मुखोपेता ईरिता वर्णदेवताः ॥ आभिमुख्यः स्मृताः सौम्ये पराङ्मुख्यान्यकर्मणि ॥ ७६ ॥ आभ्यो संख्याः समुत्पन्ना देवताज्वलिताान
नाः ॥ याभिर्मंत्री दहेच्छत्रोराज्यं सगिरिकाननं ७७ अस्त्रं मनुष्यनक्षत्रे त्यारभेत विचक्षणः ॥ आसुरेषु प्रयुंजीत देवतारासु संहरेत् ॥
॥ ७८ ॥ पूर्वोत्तरात्रयं पश्चाद्धरएपार्द्रा यरोहिणी ॥ इमानि मानुषाण्याहुर्नक्षत्राणि —— मनीषिणः ॥ ७९ ॥ ० ॥
॥

उपक्रमेत्यादिना। वृक्षापक्षेत्यादिना॥ विषवृक्षः कारस्करः। अक्षवृक्षः विभीतकः॥ सिद्धार्थः सर्षपः॥ विष्टिकाले भद्राकाले। आग्नेयास्त्रेण। प्रतिलोम
पठितजातवेदमंत्रेण शत्रुनामसंवेष्ट्य कुंडमध्ये खनित्वा तत्र निधाय तालपत्रं तदुपरि होमं कृत्वा पुनस्तत्पत्रमुद्धृत्य शीतलतोये निक्षिपेत्। उक्तफलसिद्धिः
॥लवणतोये लवणमिश्रिततोये। ऋक्षः शत्रुनामनक्षत्रवृक्षः। तल्लवणतोये कारयेत्। आवर्तयेत्। कारस्करस्यौतत्सुतलौहदर्पादौ आग्नेयमंत्रमुच्चर

ज्येष्ठाशतभिषंमूलं धनिष्ठाश्लेषकृत्तिका॥ चित्रामघाविशाखास्युस्तासु राक्षसदेवताः ८० अश्विनीरेवतीपुष्यस्वातीहस्तपुनर्वसू॥
अनुराधामृगशिरःश्रवणादेवतास्त्विमा ८१ उपक्रमेतनंद्रासु रिक्तासु स्वं विसर्जयेत्॥ भद्रास्वाहरणं कुर्याज्जपास्वत्यंतमुत्तमं ८२
उपक्रमो भौमवारे शनिवारे विसर्जनं। प्रतिसंहरणं वारे गुरोः शुक्रस्य वा भवेत् ८३ स्थिरेषु राशिष्वारंभश्चरेषु स्याद्विसर्जनं। अस्त्र
संहरणं कुर्याद्उभयेषु विचक्षणः ८४ कृष्णपक्षेऽनलेनास्त्रं विसृजेच्छशिना पुनः। शुक्लपक्षे क्रमादस्त्रं पुनरात्मनि संहरेत्॥
८५ भानुनामोऽस्त्रसंहारौ कुर्यात्पक्षद्वये सुधीः पश्चिमाभिमुखो भूत्वा कर्म सर्वं प्रसाधयेत् ८६ नक्षत्रवृक्षशकलानां ध्यात्वा कर्म
संयुतान्॥ तत्तन्मंत्राक्षरोपेतान्मंत्री मंत्रार्णसंख्यया ८७ जुहुयादेधितेवह्नौ मारयेद्रिपुमात्मनः॥ कृष्णाष्टमीं समारभ्य यावत्कृष्ण
चतुर्दशी ८८ धत्तूरविषवृक्षाक्षसंभूतहोत्या नमिद्वरान्॥ राजीतैलेन संलिप्तान्पृथक्तमसहस्रकं ८९ जुहुयात्संयतो मंत्री रिपुर्य
मपुरं व्रजेत्। सप्तरात्रं प्रजुहुयात्सिद्धार्थस्नेहलोलितैः ९० आर्द्रवस्त्रो विष्टिकाले मरीचैर्मनुना मुना॥ निशृत्यतेन्वरेणारिः प्र
लयाग्निसमेनसः ९१ तालपत्रे समालिख्य शत्रुनामयथाविधि। आग्नेयास्त्रेण संवेष्ट्य कुंडमध्ये निखन्यते ९२॥ ॥न किंचित्किंचि

ज्जपेत्। उक्तफलसिद्धिः॥ तामेव प्रतिकृतिं तस्मिन्नेव लवणजले उष्णजले निक्षिप्य मंत्रं जपेत्। उक्तफलं भवति। तीक्ष्णतैलेन सर्षपतैलेन क्षुद्रसलिलोसा
मुद्रलवर्णं नक्षत्र— विषवृक्षस्वेः। कारस्कारवृक्षजैः। व्रणकृतैलं भल्लाततैलं। अतिदुर्गापि। दुर्गाणां स्वरूपं स्वपमेवाग्रे वक्ष्यते। स्मरणपुरःसरतमपुशकैसपु

इतिश्रीगूढार्थदीपिकायां एकविंशः पटलः २१ समाप्तम् ॥ श्री ॥ श्री ॥ श्री ॥
रइतिसिंधुरदुर्गास्त्रं ॥ अग्निंइति ॥ अग्निदुर्गास्त्रस्य शार्थमपरं ॥ इतिश्रीगूढार्थदीपिकायांएकविंशः पटलः २१ समाप्तम् ॥ श्री ॥ श्री ॥ श्री ॥
रइतिसिंधुरदुर्गास्त्रं ॥ अग्निंइति ॥ अग्निदुर्गास्त्रस्य शार्थमपरं ॥ विष्णुमामार्गवीजानिमरीचिमधुसंयुतं
जुहुयान्मरिचैः क्रुद्धोज्वराक्रांतः सञ्जायते ॥ तदादापक्षिपेनोपेशीतले सवशो भवेत् ९३ पिष्णुमामार्गवीजानिमरीचिंमधुसंयुतं
जुहुयान्मरिचैः क्रुद्धोज्वराक्रांतः सञ्जायते ॥ तदादापक्षिपेनोपेशीतले सवशो भवेत् ९३ किंचित्किंचित्क्षिपेत्तोपेद्व्याकारस्करो
अत्युष्मेलवणंतोयेनिः क्षिप्यक्वाथयेत्ततः ९४ ऋक्षवृक्षप्रतिकृते हृदये वदने नसि । किंचित्किंचित्क्षिपेत्तोपेद्व्याकारस्करो ।
अत्युष्णेलवणंतोयेनिः क्षिप्यक्वाथयेत्ततः ९४ ऋक्षवृक्षप्रतिकृते हृदये वदने नसि । तीक्ष्णस्नेहेनसंलि
त्यया ९५ आग्नेयमुच्चरन्मंत्री सोचिराज्ज्वरितो भवेत् ॥ क्वथितेभसितां क्षिप्त्वाहन्याच्छत्रूनपत्नतः ९६ तीक्ष्णस्नेहेनसंलि
त्यया ९५ आग्नेयमुच्चरन्मंत्री सो चिराज्ज्वरितो भवेत् ॥ क्वथितेभसितां क्षिप्त्वा हन्याच्छत्रूनपत्नतः ९६ सामुद्रेस
प्तां शत्रुप्रतिकृतिं निशि ॥ तापयेद्दधिते वह्नौ प्रतिलोममनुंजपन् ९७ ज्वरेणा वाध्यते सद्यो होमाद्स्य मृतिर्भवेत् । सामुद्रेस
प्तां शत्रुप्रतिकृतिं निशि ॥ तापयेद्दधिते वह्नौ प्रतिलोममनुंजपन् ९७ ज्वरेणा वाध्यते सद्योहोमाद्स्यमृतिर्भवेत् । सामुद्रेस
प्तां शत्रुप्रतिकृतिं निशि ॥ तापयेद्दधिते वह्नौ प्रतिलोममनुंजपन् ९७ अथो वक्त्रां विनिक्षिप्य पश्चाद्विषतरुत्थया
लिलेहिंगुविषजीरककलोलिते ९८ क्वथिते पुत्तलिं साध्यनक्षत्रतरुनिर्मितां ॥ अथो वक्त्रां विनिक्षिप्य पश्चाद्विषतरुत्थया
लिलेहिंगुविषजीरककलोलिते ९८ क्वथिते पुत्तलिं साध्यनक्षत्रतरुनिर्मितां ॥ आदित्यरथनागेन्द्रयस्ता ग्नि
लिलेहिंगुविषजीरककलोलिते ९८ क्वथितेपुत्तलिंसाध्यनक्षत्रतरुनिर्मितां ॥ आदित्यरथनागेन्द्रयस्ताग्नि
॥ ९९ ॥ तच्छिरस्ताडनं कुर्वन्जपेदस्त्रं विलोमतः । समाहान्मरणं याति शत्रुर्ज्वरविमोहितः १०० आदित्यरथनागेन्द्रयस्ताग्नि
॥ ९९ ॥ तच्छिरस्ताडनं कुर्वन्जपेदस्त्रं विलोमतः । समाहान्मरणं याति शत्रुर्ज्वरविमोहितः १०० तर्पयेद्भानुमालो
तद्दिषाहतं ॥ नयं तैलेन लिप्तांगं दग्धं भानुमरीचिभिः १०१ अधोमुखं निजरिपुं ध्यात्वा क्वथितवारिणा ॥ तर्पयेद्भानुमालो
तद्दिषाहतं ॥ नयं तैलेन लिप्तांगं दग्धं भानुमरीचिभिः १०१ अधोमुखं निजरिपुं ध्यात्वा क्वथितवारिणा ॥ १०३ ॥ हु
क्यशत्रुर्मृत्युप्रियो भवेत् १०२ विभ्रंती मुसलं शूलं ध्यायन्कालघनप्रभां ॥ कार्पासवीजैर्निवस्य पत्रैर्मषीघृतप्लुतैः ॥ १०३ ॥ हु
क्यशत्रुर्मृत्युप्रियो भवेत् १०२ विभ्रंती मुसलं शूलं ध्यायन्कालघनप्रभां ॥ कार्पासवीजैर्निवस्य पत्रैर्मषीघृतप्लुतैः ॥ पल्लवैर्विषवृ
त्वा विद्वेषयेच्छत्रून स्त्रेणानेन देशिकः ॥ विभ्राणां तर्जनीं शूलं ध्यात्वा दुर्गां भयंकरीं १०४ महिषी घृतसंसिक्तैः पल्लवैर्विषवृ
त्वा विद्वेषयेच्छत्रून स्त्रेणानेन देशिकः ॥ विभ्राणां तर्जनीं शूलं ध्यात्वा दुर्गां भयंकरीं १०४ महिषी घृतसंसिक्तैः अजारुधिरसंसिक्ते
क्षजैः ॥ हुत्वा रिपोः क्षणात्सेनामुच्चाटयति मंत्रवित् १०५ ध्यात्वा देवीं पुराप्रोक्तां चतुर्भिर्मस्त्विान्वितैः । अजारुधिरसंसिक्ते
क्षजैः ॥ हुत्वा रिपोः क्षणात्सेनामुच्चाटयति मंत्रवित् १०५ ध्यात्वा देवीं पुराप्रोक्तां चतुर्भिर्मस्त्विान्वितैः ॥ १०७
जुहुयाद्दिवसत्रयं १०६ रिपोरुच्चाटनं कुर्यात्सेनापानात्र संशयः ॥ अग्निशूलकरां दुर्गां ज्वलंतीं प्रलयाग्निवत् ॥ १०७
जुहुयाद्दिवसत्रयं १०६ रिपोरुच्चाटनं कुर्यात्सेनापानात्र संशयः ॥ अग्निशूलकरां दुर्गां ज्वलंतीं प्रलयाग्निवत् ॥ कालांजननिभां दुर्गां शूलखड्गधरीं
ध्यात्वा सर्षपतैलाक्तैर्वीजैर्धत्तूरसंभवैः । हुत्वा विमोहयेच्छत्रून्मरीचैर्वा ससर्षपैः १०८ कालांजननिभां दुर्गां शूलखड्गधरीं
ध्यात्वा सर्षपतैलाक्तैर्वीजैर्धत्तूरसंभवैः । हुत्वा विमोहयेच्छत्रून्मरीचैर्वा ससर्षपैः १०८ सिंहाधिरूढां धावंतीं धावमानां
स्मरन् ॥ नक्षत्रवृक्षसंभूतैर्व्रणाक्तैः स्नेहसंयुतैः १०९ समिद्भिः प्रजुहुयाद्धन्यान्मासेन वैरिणं । सिंहाधिरूढां धावंतीं धावमानां

शा॰ति॰ टी॰गू॰ १०२

शरान्कार्मुकनिर्मुक्तान्वह्निज्वालामुखाकुलान्॥ मुंचंतीं संस्मरन्दुर्गां तर्पयेद्रक्तवारिणा १११ भानुबिंबं समालोक्य रिपोरुच्चाटनं भ
वेत्॥ अतिदुर्गामपापघ्निगदाहस्तां विचिंतयेत् ११२ विद्युद्दामसमानाभां महिषीघृतसंयुतैः। तुलाकैर्जुहुयान्निंबविभीतकसमि
द्वरैः ११३॥ कोद्रवैरथ शत्रोश्च सेनायास्तंभनं भवेत्॥ आतपाशांकुशां रक्तां गां निदुर्गां मंत्रं स्मरेत्॥ ११४॥ लोणैः समधुरैः साध्यरूपका
दृंधितेनलो जुहुयान्निशि सप्ताहान्मंत्रविद्वशयेन्नृपान्॥ ११५॥ पाशांकुशधरां रक्तां विश्वदुर्गां विचिंतयेत्॥ फलिनीकुसुमैः फुल्लैश्च
दनांभः समक्षितैः॥ ११६॥ जुहुयान्निशि यो मंत्री तस्य विश्वं वशं भवेत्॥ शरच्चंद्रनिभां देवीं विगलत्परमामृतां ॥ ११७ ॥ पाशांकुश
धरां ध्यायन्सिंधुदुर्गां समिद्वरैः ॥ वैतसैर्मधुरासिक्तैर्जुहुयाद्वृष्टिसिद्धये॥ ११८॥ कपालं त्रिशिखं पाशमंकुशं बिभ्रतीं करैः। जपाकुसु
मसंकाशामग्निदुर्गां विचिंतयन्॥ ११९॥ हुत्वा लवणपुत्तल्या मधुरत्रययुक्तया॥ आकर्षेद्वांछितान्साध्यान्मंत्रविन्नात्र संशयः॥ १२०॥
अतिदुर्गेयमत्याद्या घदंता त्रिष्टुबीरिता॥ दुर्वर्णोताथगायत्र्याद्यागाणि दुर्गा समीरिता॥ १२१॥ विश्वाद्याणपसरांता सा विश्वदुर्गा
समीरिता॥ सिंध्वाद्या सा वकारांता सिंधुदुर्गा निगद्यते॥ १२२॥ त्वंतामग्न्यादिकामेनामग्निदुर्गां विदुर्बुधाः॥ अंगरोस्थंडिलं कृत्वा
सुगंधिकुसुमादिभिः॥ १२३॥ देवीमभ्यर्चयेन्नित्यं प्रागुक्तेनैव वर्त्मना॥ आहरेद्दानिषु बलिं चरुणा सर्वसिद्धिदं ॥ १२४॥ कृत्वारोग
भयघ्नो हभूतादीन्नात्र संशयः। यथावदग्निमाराध्य गंधैः पुष्पैर्मनोरमैः। १२५॥ स्थित्वा तस्याग्रतो मंत्री जपेन्मंत्रमनन्यधीः॥
जपोयं सर्वसिध्यै स्यान्नात्र कार्या विचारणा॥ १२६॥ लवणैर्मधुरासिक्तैर्जुहुयात्पश्चिमामुखः॥ मंत्रार्णसंख्यया मंत्री रिपुमात्मव
शं नयेत्॥ १२७ ॥ शालीन्मत्स्यान्त्य संशोध्य मुद्गान्कुर्वीत तंडुलान्॥ जपित्वा पंचगव्येषु संस्कृते हव्यवाहने॥ १२८ ॥ ॥
॥ ॥

चरुं पचेज्जपन्मंत्रमवतार्य पुनः सुधीः॥ अर्चयित्वा विशदधीर्देवीमग्नौ यथा पुरा॥१२९॥ जुहुयाच्चरुणानेन साज्येनाष्टसहस्रकं
।पात्रे संपातनं कुर्वन्साध्यं तत्राशयेत्पुनः १३० शेषं तं निखनेद्द्वारि संपातं प्रांगणांतरे॥ कृत्यारोगा विनश्यंति सहभूतग्रहामयैः॥
१३१॥ परैः कृत्यादिता कृत्या पुनस्तानेव भक्षयेत्॥ व्रीहिभिर्हविषा क्षीरैः पयोवृक्षसमिद्वरैः १३२ आज्यैर्मधुत्रयोपेतैरेतैर्दशशतं पृथ
क् जुहुयात्संपदां भूमिसाधको भवति ध्रुवं १३३ भास्करे मेषराशिस्थे मंत्रज्ञोनुगुणे दिने॥ नद्यां सागरगामिन्यां सततं पुष्कलांभसि १३४
उध्धृत्यादाय सिकताः संशोध्य परिशोषयेत्॥ न्यस्य ताः पंचगव्येषु संस्कृते हव्यवाहने १३५ भजेयन्मनुना सिध्येद्दर्व्या ब्रह्मरुहोत्थ्य
पा॥ सिंहमेषधनुस्थेऽर्के कृष्णपक्षेष्टमी तिथौ १३६ विशाखाकृत्तिकामूलहस्तोत्तरमघास्वथ॥ रोहिण्यां श्रवणे वारे मंदवाक्पतिदे
वतो॥१३७॥ विहायान्येषु कुर्वीत सिकतास्थापनं सुधीः॥ गृहग्रामादिराष्ट्राणां रक्षार्थं सिकताः शुभाः १३८॥ प्रस्थाढकघटोन्मा
नामध्यादिषु वटेष्विमाः॥ नवसु प्रक्षिपेज्ज्ञमास्तेषु संपूजयेत्क्रमात् १३९॥ मध्यादिदेवीमस्त्राणि कपालांतानि देशिकः॥ चक्रं
शंखमसिं खेटं बाणं चापं त्रिशूलकं॥१४०॥ कपालं स्वस्वमंत्रेण संपूज्यांते बलिं हरेत्॥ नक्षत्रग्रहराशीनां लोकेशानां बलिं हरे
त्॥१४१॥ विहितायत्र रक्षेयं वर्द्धते तत्र संपदः॥ क्षुद्रग्रहमहारोगसोरभूतसरीसृपाः॥१४२॥ अमुना विलयं यांति विधिना
नात्र संशयः॥ सिकतानां विशुद्धानां विकारकुडवं सुधीः॥१४३॥ पंचगव्ययुतं पात्रे त्रस्य वृक्षेणा निर्मिते॥ निक्षिप्य वि
धिनायत्र स्थापयेत्तत्र संपदः॥१४४॥ दिने दिने प्रवर्द्धते कालविष्ट्यादिभिः सह॥ महोत्पाता विनश्यंति कृत्याद्रोहमहाग्रहाः
॥१४५॥ चरुगव्याश्मना कुर्यात्स्थापनं विधिनामुना॥ गोमूत्रं प्रस्थमानं स्याद्गोमयं प्रस्तदर्द्धकम्॥ १४६ ॥

आग्नेयमंत्रेयथावन्निरूप्याधुनाऽतिकीर्णाविष्टस्यनिषेधमितिकामवतः शत्रुनिग्रहमिच्छतः॥ तन्निग्रहार्थे पूर्वोक्ताग्नेयमंत्रस्यप्रयोगान्यथावद्वक्तुमार
भते। अथेत्यादिक्षिप्रास्त्रमित्यादिना॥ अस्त्रस्वरूपमाह॥ अतिदुर्गेति तस्यषडंगमाह॥ दिनास्त्रस्येति॥ ध्यानप्रकारान्स्वरूपदिष्टानितिपूर्वमावेदितं॥ तदेवस्था

आज्यात्समगुणंक्षीरंगोमूत्रात्रिगुणोदधि॥ गोमूत्रेणसमंसर्पिः सर्वंवासममुच्यते॥ १४७॥ गावः शुक्लकपिलाश्वेतहिमभूम्रारु
णप्रभा। अभावेगदिताः सर्वाः सर्वेवाकपिलोद्भवं १४८ एकोनपंचाशत्कोष्ठेफलकेब्रह्मशास्त्रिनः विहायकोणकोष्ठानिश
तयार्थंजातवेदसं १४९ लिखित्वामध्यकोष्ठादिपूजयेतत्रदेवतां॥ कृत्वाहोमंससंपातंनिखनेत्तद्यथापुरा १५० दद्याद्बलिंय
थापूर्वंअस्यपूर्वोदितंफलं॥ मध्येमापामष्टकोष्ठेषपादानघौकृत्वामातृकार्णैःप्रवीतं १५१ भूविवस्थंसर्वभूतामयघ्नंरक्षा
युःश्रीकीर्तिदंपेत्रमेतत्॥ आग्नेयास्त्रस्यजानातिविसर्गादानकर्मणी॥ यःसमान्गुरुणाशिष्टस्तस्याधीनंजगत्त्रयं १५२ इति
शारदातिलकेएकविंशःपटलः॥ अथोदिनास्त्रंकृत्यास्त्रंवक्ष्येशत्रुविमर्दनं॥ अतिदुर्गामंत्रंप्राहुर्दिनास्त्रंमंत्रवित्तमाः १ प्र
तिलोममिमंमंत्रंकृत्यास्त्रंपरिचक्ष्यते॥ दिनास्त्रस्यषडंगादीन्प्रतिलोमोदितान्विदुः॥ २॥ भानुविंबेगतंशत्रुमधोवक्त्रंविपाह
तं॥ मूलाद्दुत्थितयाग्रस्तंकुंडल्याभावयन्सुधीः॥ ३॥ मूलाधारेक्षिपेत्सद्यःप्रस्फुरत्कालपावके॥ दिनत्रयात्ज्वराक्रांतोरिपुः
प्राणान्विमुंचति ४ दिनास्त्रेणप्रविद्धांगंस्वाधिष्ठानगतंरिपुं॥ पंचवायुसमिद्धेनवह्निनादग्धविग्रहं॥ ५॥ ध्यायन्मंत्रंजपेत्सद्यः
सभवेद्यमवल्लभः॥ मणिपूरगतंशत्रुमग्निनादीप्तविग्रहं॥ ६॥ ध्यायन्दिनास्त्रंप्रजपेत्समृत्युवशतांव्रजेत्॥ आनाहताहितःश
त्रुर्निर्दग्धोमंत्रवह्निना॥ ७॥ ८॥ स्थितिं। भानुविंबेति। मूलात्मूलाधारात्कालपावकमूलाधारेक्षिप्त्वाधिष्ठानं मूलादुपरितनभागः। पंचवाय
वःप्राणापानादिभिर्वह्निना मूलाधारस्थितवह्निनामणिपूरकागतं। अधिष्ठानादुपरितनभागगतं॥ अग्निनापूर्वोक्तेना आनंदतोनामऊर्ध्वभागोमाधुस्थानं।

पाशेनवध्वाशीघ्रेननीपतेयमकिंकरैः ॥विशुद्धस्थानगोवैरीदिनवाणेनपीडितः॥८॥अधोमुखःस्मृतस्तूर्णंनिरायुःस्याद्दिनत्र
पात॥आज्ञायानिहितंशत्रुंदहेत्त्वानाग्निनाधिया ९ पुत्रमित्रकलत्रादीहित्वामृत्युमुपाश्रयेत॥नाभिमात्रोदकेस्थित्वाध्यायन्विवेदि
नेशितुः।१०॥वैरिणांदग्धसर्वांगंमंत्रमष्टोत्तरंशतं॥जपेत्सप्तदिनाद्र्वाग्यमलोकंसगच्छति॥११॥आरवारंसमारभ्यसप्ताहंप्रजपेन्मंत्रं
सूर्योदयंसमारभ्ययावदस्तमयोभवेत् १२ सन्निपातज्वराविष्टोयमग्रस्तोभवेदरिः।स्थित्वादुर्गालयेमंत्रीत्रिरात्रंवर्जितापानः १३
दिनवाणेनविद्धांगंवैरिणांप्रविचिंतयेत्॥जपेन्मंत्रमिमंशत्रुर्ज्वरितोमरणंव्रजेत्॥१४॥स्पष्टादुर्गांजपेन्मंत्रमनश्नंस्त्रिदिनंस्मर
न्॥शूलप्रोतंनिजरिपुंदिनास्त्रेणप्रदीपितं॥१५॥ज्वरेणमहताविष्टोजायतेसोयमातिथिः॥रविमंडलगंशत्रुंदष्टंतक्षकपन्नगैः १६
विषाग्निदग्धसर्वांगंध्यायन्नुक्षनवारिणा॥तर्पयेद्दिनवाणेनस्यादसौयमवल्लभः॥१७॥रविबिंबादागतयाज्वालयाग्रस्तविग्रहं।
रिपुंध्यात्वाजपेन्मंत्रंसक्रीडतियमांतिके॥१८॥ग्रहग्रस्तार्कबिंबस्थंविद्धंमंत्रमयैःशरैः॥प्रतिबध्यनिजंशत्रुंजपेदष्टतमंत्रवित्॥
॥१९॥रिपुंनयतिशीघ्रेणयमदूतोयमालयं॥प्रलयानलसंकाशांकालरात्रिमिवापरम्॥२०॥शूलपाशधरांघोरांसिंहस्कंधनिषे
दुषीं॥सवितुर्मंडलांतःस्थांरक्तनेत्रत्रयोद्धतेः।२१॥विस्फुलिंगैर्निर्दहंतींरिपुमाकुलविग्रहं॥स्पष्टदंष्ट्राधरान्त्यभ्रूकुटीभीषणा
ननां॥२२॥तर्जयंतींनिजंशत्रुंतर्जन्याभीमरूपया॥दंष्ट्रामयूखजालेनद्योतयंतींदिगंबरां॥२३॥शूलेनवैरिणोवक्षोदारयं
तींभयंकरीं॥जपेद्दिनत्रयंमंत्रीमारयेद्रिपुमात्मनः॥अस्त्रमंत्रकृतन्यासःप्रलयाग्निसमप्रभाम् २४॥रक्तवस्त्रधरांकुंडारक्त
नेत्रत्रयान्विताम्॥सिंहाधिरूढांधावंतींधावमानंरिपुंप्रति ॥ २५॥ खड्गेनतत्शिरःछित्वाक्षणाद्व्योमस्थलीगताम् ॥

ध्यात्वादुर्गांजपेन्मंत्रंत्रिदिनंवर्जिताशनः २६॥अनेनैवविधानेनरिपुर्मृत्युप्रियोभवेत्॥कर्माण्येतानिकुर्वीतदिवसेनतुरात्रिषु
पश्चिमामुखलिंगस्यसजीवंमहिषंपुरः॥निखायतस्यशिरसिकुंडंकृत्वात्रिकोणकम्॥२८॥तस्मिन्समेधितेवह्नौयथावद्देशिको
तमः॥सत्रिकोणान्समंत्रार्णान्साध्यनामसमन्वितान्॥२९॥अजरतैनसंसिक्तान्कारस्करसमन्वितान्॥सहस्रंजुहुयाद्देवींध्या
त्वासवितृमंडले॥३०॥प्रलयाग्निसमांघोरांद्वात्रिंशद्भुजशोभितां॥उद्यदायुधसंदीप्तांनृत्यंतींसिंहमस्तके॥३१॥ महादंष्ट्रांमहा
भीमांज्वलत्केशींनरस्रुखीं॥रक्तांत्रमांसवदनांघूर्णितोग्रत्रिलोचनां॥३२॥ अनेनविधिनाशत्रुर्महाज्वरनिपीडितः॥ विमुंच
तिनिजंदेहंपुत्रमित्रादिभिःसह॥३३॥ऊर्द्धमुखांभसोमंत्रीलंबयित्वाभुजंगमं॥ भावविंवगतांदुर्गांसहस्रादित्यसन्निभाम्॥ ३४ सह
स्रपाणिचरणांसहस्राक्षिशिरोमुखीं॥सहस्रनागबद्धांगींत्रासयंतींजगत्त्रयं॥३५॥ध्यायन्ननेनसर्पास्येतर्पयेदुष्णवारिणा॥
संपतःकालपाशेनवैरीमुंचेत्स्वजीवितं॥३६॥मध्याह्नार्कप्रतप्रस्थांनदंतींनरसिंहवत्॥ घोरसिंहसमासीनांमहाभीषणदर्शनां
॥३७॥स्थूलप्रोताहितांध्यायन्जपेन्मंत्रमनन्यधीः॥तर्पयेदुष्णतोयेनसर्पवक्त्रेदिनत्रयं॥३८॥ यमस्यभवनंगच्छेदरातिर्नात्रसंश
यः॥कृष्णरूक्षप्रतिकृतिंप्रतिष्ठितसमीरणां॥३९॥उष्णोदकेविनिक्षिप्यविषाढ्येविधिनाततः॥अर्केंदुनलसंकाशांखड्गखेटक
धारिणीं॥४०॥नयनत्रयनिर्मुक्तविस्फुलिंगशताकुलाम्॥सिंहस्थांसर्पभूषाढ्यांत्रैलोक्यभयदायिनीं॥ ४१॥ खड्गकृताहितां
ध्यायन्नजपेदयुतंमनुं॥विधानेनामुनाशत्रुर्यस्तोभवतिमृत्युना॥४२॥प्रकल्प्यदुर्गांपतनेत्रिकोणंकुंडमुत्तमं॥तत्रसंज्वलिते
वह्नौमहिषीशकृताकृतौ॥४३॥एतलीमजरक्ताक्तांप्रतिष्ठितसमीरणां॥ छित्वाछित्वाप्रजुहुयादस्रजरक्तान्वितांनिशि॥ ४४ ॥

ध्यात्वा दुर्गां प्रनृत्यंतीं महिषोरस्थलांतरे॥ शूलेन महिषस्यांगं भिंदंतीं घोरदर्शनां॥४५॥ अट्टहासैरजस्त्रोक्षैर्भीषितां सुरसेवितां॥
॥ प्रलयानलसंकाशां भ्रमन्नेत्रत्रयान्वितां॥ संदष्टाधरसंभिन्नां दंष्ट्राभीनमुखांबुजां॥ खड्गखेटकयुक्ताभिः कन्यकाभिः समावृतां॥
॥४७॥ अनेन विधिना शत्रुः प्रयाति यमसन्निधिं॥ दिनास्त्रमेवं कथितं शत्रुनिग्रहकारकं॥४८॥ कृत्वास्त्रे दर्शितान्कुर्यान्प्रयोगान्मं
॥४७॥ अनेन विधिना शत्रुः प्रयाति यमसन्निधिं॥ दिनास्त्रमेवं कथितं शत्रुनिग्रहकारकं॥४८॥ कृत्वास्त्रे दर्शितान्कुर्यान्प्रयोगान्मं
त्रवित्तमः॥ आधाराद्गतां देवीं कुंडलीं सर्वरूपिणीं॥४९॥ तां ब्रह्मरंध्रमार्गेण पातां व्योमस्थलांततः॥ मुखेन शत्रुमादाय निवृत्तां स्वगृहं प्र
ति॥५०॥ ज्वलत्कालानलोद्दीप्तां विचिंत्य प्रजपेन्मनुं॥ सप्तभिर्वासरैः शत्रुर्मृत्युं प्राप्नोति मोहितः॥५१॥ अंगारवारे चित्यग्नौ सर्षप
स्नेहलोलितां॥ सिद्धार्थकुडवं जप्तं जुहुयात्पसमाहितः॥५२॥ कृत्वास्त्रज्वालया दग्धो रिपुर्यमपुरं व्रजेत्॥ चतुर्दश्यामर्द्धरात्रे चिता
स्थीन्मंत्रसाधकः॥ व्रणतैलविलिप्तानि चितायां जुहुयात्ततः॥ अनेन विधिना शत्रुर्मृत्युमेष्यति कातरः॥५४॥ नृपास्थिनिर्मितां श
त्रोर्व्रणतैलपरिप्लुतां॥ प्रतिमां स्थापितप्राणां जुहुयान्निशि साधकः॥५५॥ छित्वा छित्वा जरत्केन सप्ताहान्म्रियते रिपुः॥ श्मशानवालु
कास्पृष्टा साक्षतानियुतं जपेत्॥५६॥ विकिरेत्तास्तडागादौ कृत्वास्त्रकाथितं जलं॥ तदीयं पीतमचिरान्निहंति सकलाञ्जनान् ५७
कृष्मांगारचतुर्दश्यां प्रजप्तैः प्रेतभस्मभिः॥ महिष्याज्येन लुलितास्तन्मंत्राक्षरसंख्यया॥५८॥ निर्माय गुटिका एताः सम्पाजसप्त
मीरणाः॥ चितिकाष्ठे धितेवह्नौ जुहुयाद्दृढमानसः॥५९॥ चतुर्दशीत्रयाद्वर्वाक् शत्रुर्मृत्युवशो भवेत्॥ श्मशानभस्मसिद्धार्थान्यं चग
व्ये विनिक्षिपेत् ६० माहिषे संस्मरेद्देवीं ज्वालाग्निसदृशप्रभां॥ भर्जयेत्प्रजपन्मंत्रं विषकाष्ठेधितानले ६१ दुर्गागारे प्रजुहुयाद्दनेनायुत
मस्त्रवित्॥ पुनरादाय तद्भस्म सेनायां वैरिणः क्षिपेत्॥ ६१॥ सा सेना बहुधा भिन्ना ज्वररोगविमोहिता॥ आयुधानि परित्यज्य युद्धकाले पला

शा॰ ति॰
टी॰ शू॰
१०५

॥ग्रहयुक्तं राहुग्रस्तं। विवशेन वस्त्रवादितेन कारस्करः। विषवृक्षः। स्वकार्यमन्यत्॥ विषवृक्षप्रतिकृति शत्रुनामनक्षत्रवृक्षप्रतिनिधिमधिष्ठितसमीरणां।
प्रतिष्ठितप्राणं। स्वकार्यमपरं। आधारात् उत्थिता॥ मूलाधारादुत्थिता। मर्कटी अस्मभाषायां हूल्लके वलभाषान्तरे कवचट्॥ विडखंडं॥ उत्तल्यां निखनेत्। षड्विं

गेहग्रामादिषु क्षिप्रं कुर्यादुच्चाटनं क्षणात्। सप्तवारेषु कुलिके दुर्गावेश्मसु शार्कराः॥ ६३॥ सप्तमाहेंद्रदिग्वर्जं गृहीत्वा प्रजपे-
न्मनुं॥ महिषीपंचगव्येषु भर्जयेत्ता यथातुरा ६४ भूयो जपित्वा विकिरेद्गृहग्रामपुरेष्विमाः॥ स देशो नश्यति क्षिप्रं दग्धो
मंत्रभवाग्निना ६५ ब्रह्मदंडीपर्कटिकां करंजौ शनिकां त्रयं॥ भौमवारस्य कुलिके गृहीत्वा प्रजपेन्मनुं॥ ६६॥ चतुर्दश्यां रि-
पोर्गेहे निखनेत्प्रजपेन्मनुं॥ सांईं उत्तकलत्वाद्येरुत्सादो जायते रिपोः ६७ एकैकं वा खनेन्मंत्री मंडलात्तत्फलं भवेत् ॥
षड्विंदुपक्षं पतत्स्यां निखनेद्दोहनान्वितं॥ ६८॥ पृष्ठातां प्रजपेदस्त्रं कृष्णाष्टम्यां निशार्द्धतः॥ शत्रुनामसमायुक्तां श्मशाने
निखनेदिमां ६९ प्रणश्येत्स रिपुः शीघ्रं सकुटुंबः सबांधवः। कपालशकलान्मंत्री कृत्वास्त्राक्षरसंख्यकान्॥ ७०॥ स्पृष्ट्वा
तान्प्रजपेदस्त्रं प्राणस्थापनपूर्वकं॥ कृष्णांगारचतुर्दश्यां श्मशाने विषवृक्षजे ७१ जुहुयादजरक्ताक्तान् कृत्वास्त्रज्वालया
हतः। रिपुर्यमपुरं गच्छेन्महाज्वरविमोहितः ७२ अजारक्तेन संपूर्णे कलशे निःक्षिपेदहिं। कपालेन पिधायेनं छादयेत्तकव
ससा ७४ पूजयेद्गंधपुष्पाद्यैः स्पृष्ट्वा तमयुतं जपेत्॥ भौमवारे निशामध्ये कारस्करसमेधिते॥ श्मशानवह्नौ जुहुयाद्गच्छेद्यम-
पुरं रिपुः॥ साध्यनक्षत्रवृक्षेण कृत्वा कुंभं प्रपूजयेत् ७६ माहिषैः पंचगव्यैस्तं विडालेन तु निक्षिपेत् जपपूजादिकं सर्वं यथा-
पूर्वं समाचरेत्॥ ७७॥

दुःकीटविशेषः। षड्विंदुसंज्ञितेति। चातुर्मास्ये भवति कीटः। कपालप्राप्ति शिखरात्। अहिः सर्पः छादयेत् आच्छादयेत्।
विडालं मार्जारं। जरातैलं भल्लातकतैलं। अजसा पयसा विधिं कुर्वीत। दमं कुर्वीत इतरत्स्पष्टम् ॥ ० ॥ ०

राम॰
१०५

ऋकृपंचकस्यऋष्यादीनाह॥ अंगिरा इत्यादिना॥ त्रिरिमंत्रमुद्धरति॥ नातश्चिरीति
मंत्रान्तरमाह॥ अतोलवणमिति॥ ऋकृपंचकमुद्धरति॥ ऋगाद्या इति
कारस्कर भवे वह्नौ कृत्वा स्रेण समेधिते॥ अयुतं व्रणतैलेन हुत्वा तैतं घटं पुनः ७८ आमलकं समुद्धृत्य जपेन्मंत्रमनन्यधीः॥
जुहुयाद्विधिनानेन त्रिदिनैर्म्रियते रिपुः। ७९। सुंदरं महिषीवत्समेकरात्रमुपोषितं॥ पाययेन्महिषीसर्पिः प्रस्थं मंत्रेण मंत्रितं
कुशेरावद्धसर्वांगं स्थापितप्राणमंजसा॥ कारस्करैधिते वह्नौ व्रणतैलेन मंत्रवित्॥ ८१॥ होमं कृत्वायुतं वत्सं जुहुयाद्यतमान
सः। एकेन दिवसेनारिर्गच्छेद्यमपुरं सुधीः ८२ त्रिकोणकुंडनिहिते वह्नौ मंत्रेण दीपिते॥ अर्चिते गंधपुष्पाद्यैरयुतं जुहुयात्क
मात् ८३ राजिभल्लातकतिलतैलैः सप्तदिनं ततः। प्रसूतिसमयं प्राप्तां महिषीं स्थापितां तिलौ ८४। पूजितां गंधपुष्पाद्यैः स्पृश
न् कूर्चेन तां जपेत्॥ मस्तकाद्योनिपर्यंतं धिया वत्समनुस्मरन्॥ ८५॥ आकृष्य हस्ते पतति तं जुहुयादेधिते नले॥ एवं कृते समु
त्पन्ना कृत्यारीन्प्राहुताशनात् ८६ भक्षयेदचिराच्छत्रुमीश्वरेणाविरक्षितं। पुनरग्नौ निपत्येषा कर्तारमपि कोक्षिणी। ८७। एवंवि
धानि कर्माणि यः कुर्यान्मंत्रवित्तमः॥ सं जपेदात्मरक्षार्थं मंत्रान्मृत्युंजयादिकान्॥ ८८॥ अतो लवणमंत्रस्य विधानमभिधीय
ते॥ ऋगाद्य कथितां पूर्वं लवणां भसिपूर्विकाः ८९ लवणांभसितीक्ष्णोसि उग्रोसि हृदयं तव। लवणस्य पृथिवी माता लवणस्य
वरुणः पिता ९० लवणो हूयमाने तु कृत्तो निद्राकृतो रतिः। लवणं दहति पचति पाचयति लवणं छिंदति भिंदति ९१ अमुकस्य द
हगात्राणि दह मांसं दह त्वचं। दह त्वगस्थिमज्जानि अस्थिभ्यो मज्जिकां दह ९२ यदि वसति योजनशतेन दीनां वा शतांतरे।न
गरे लोहप्राकारे कृष्णसर्पशतार्गले ९३ तं दग्ध्वा नय मे शीघ्रमग्ने लोणस्य तेजसा। तत्रैवं वशमायातु लवणमंत्रपराक्रमः ९४ उद्धा

पातेरात्रिःशल्यविद्धस्यशूलाग्रारोपितस्यच॥यातेरात्रिर्महारात्रिःसातेरात्रिर्महानिशा ९५ लवणादिद्वितीयान्यादहाद्याचापरिकीर्ति
ता॥तंदग्धान्याचतुर्थीस्याद्यातेपूर्वार्थपंचमी ९६ अंगिरामुनिराख्यातश्छंदोनुष्टुबुदाहृत॥अग्नीरात्रीपुनर्दुर्गाभद्रकालीचदेव
ताः ९७ चिटिमंत्राक्षरैःकुर्यात्षडंगानिसमाहितः।पंचभिर्हृदयंप्रोक्तंत्रिभिर्वर्णैःशिरःस्मृतं ९८ पंचवर्णैःशिखाप्रोक्ताकवचंकर
पाक्षरैः॥पंचभिर्नेत्रमुदितंयुगलेनास्त्रमीरितं ९९ तारंचिटिद्वयंपश्चाच्चंडालितदनंतरं।महत्यदायांतांब्रूयादमुकंमेततःपर
म् १०० वशमानयठद्वंद्वंचिटिमंत्रउदाहृतः॥चतुर्विंशत्यक्षरात्मासर्वकामफलप्रदः १०१ नवकुंकुमसन्निभेत्रिनेत्रंरुचिराकल्प
शांतंभजामिवह्निं॥शुकशक्तिवराभयानिदोर्भिर्दधतंरक्तसरोरुहेनिषण्णं १०२ कालांबुवाहद्युतिमिंदुचक्रांहारावलिंशोभिपयोधरा
ढ्याम् कपालपाशांकुशशूलहस्तांनीलांबरांयामवतींनमामि १०३ कालांबुदाभामरिशंखशूलखड्गाढ्यहस्तांतरुणेंदुचूडांभीमांत्रि
नेत्रांजितशत्रुवर्गांदुर्गांस्मरेद्दुर्गतिभंगहस्तां १०४॥टंकंकपालंडमरुंत्रिशूलंसंबिभ्रतीचंद्रकलावतंसा॥पिंगोर्ध्वकेशीसितभीमदं
ष्ट्राभूयाद्विभूत्यैममभद्रकाली १०५ लक्षपंचकंजपेत्सम्यग्यतंतद्दशांशतः।हविषाघृतसिक्तेनजुहुयाद्दर्वितेनले १०६ एवंकृ
तपरस्त्वयंप्रयोगेकुशलोभवेत्॥ आग्नेयीमवतीध्येयावश्याकर्षणकर्मयोः॥१०७॥स्मरेद्दुर्गांभद्रकालींमंत्रीमारणकर्मणि॥
जानुप्रमाणेसलिलेस्थित्वानिशिजपेन्मनुं १०८ अनेनवांछितःसाध्यःकिंकरोजायतेक्षणात्॥नाभिमात्रोदकेस्थित्वाजपेन्मंत्र
मिमंसुधीः॥१०९॥अष्टोत्तरसहस्रंयत्तस्यसाध्योवशोभवेत्॥लक्षपंचकंजपेत्सम्यक्कंठमात्रांभसिस्थितः॥११०॥सप्तभिर्दिवसैर्भू
यान्वशयेद्विधिनामुना॥ विलिख्यतालपत्रेतंसाध्यनाम्नाविदर्भितं॥१११॥ निःक्षिप्यक्षीरसंमिश्रेजलेतत्काथयेन्निशि°

ध्यानश्लोकश्चस्पष्टः।प्रयोगानाह।।जातप्रमाणेति।।पोतसंभूतं राष्ट्रवंशिष्टं।कुडवंप्रस्थं।प्राणमंत्रक्षतंपंचप्राणप्रतिष्ठाप्रोक्तंपंचत्रिंसंहत्यानितिमंत्राणिन्यु

वश्योभवतिसाध्योस्यनात्रकार्याविचारणा ११२।।तालपत्रेलिखित्वैवंभद्रकालीगृहेखनेत् वश्यायसर्वजंतूनांप्रयोगोयमुदा
हृतः ११३ तालपत्रेलिखेद्यंत्रंसाध्यनामविदर्भितं।।तापयेत्खादिरेवह्नौमासंवश्योभवेन्नरः ११४ त्रिकोणंकुंडमापाद्यसम्य
क्शास्त्रोपलक्षणं।।तस्मिन्होमंप्रकुर्वीतसंस्कृतेहव्यवाहने ११५।।प्रक्षाल्याज्यदुग्धेनसंशोध्यलवणंसुधीः।।सुवर्णितंप्रजुहु
यात्सप्ताहाद्वशयेज्जनान् ११६ दधिमध्वाज्यसंसिक्तैःसैंधवैर्जुहुयात्तथा।वशयेदखिलान्देवान्त्रिलोकीपार्थिवान् ११७ वि
शुद्धंलवणंप्रस्थंविभक्तंपंचधापृथक्।।एकैकयाप्रजुहुयादृचापंचाहमादरात्।।यस्यनाम्नासवश्यःस्यादनेनविधिनाचिरात्
शुद्धंलवणमादायजुहुयान्मधुरान्वितं ११९।ऊनपंचाशदाहुत्यावशंनयनिवांछितं नित्यंशुद्धेनलवणेनहुत्वाशत्रून्वशंनये
त्।।१२०।।मधुरत्रयसंयुक्तैर्लवणैःसाधुचूर्णितैः।।जुहुयाद्वशयेन्नारींनरान्नृपतीनपि।१२१ मंत्रेकृष्णतृतीयादिप्रजपे
द्यावदष्टमी।।पुत्तलीःपंचकुर्वीतसांगोपांगाःसमाःशुभाः।।१२२।।एकासाध्यक्रमेणस्यादन्यापिहेममयीमता।।चक्रिहस्तम्
दान्यास्यात्स्यात्सिक्थमयीस्मृता १२३।।लवणंपोतसंभूतंचूर्णितंपरिशोधितं।।कुडवप्रस्थमेतत्क्षीरदध्याज्यमधुभिःक्री
मात्।।१२४।।यद्वाज्यमधुभिःसम्यक्छिन्नभिन्नेनामुनाततः।।कुर्वीतपुत्तलींसौम्यांसर्वावयवशोभिताम्।। १२५।।०।।

क्रममतात्।।तस्याःपुत्तल्यास्तनौप्रतलीदेहे।स्वक्रमेणन्यासस्थानान्याह ।। अंगुष्ठेत्यादिना देवतोपस्थानपराः श्लोकाः स्पष्टाः ।। श्री° ।।

प्राणमंत्रकृतं येन मासां हृदि विनिःक्षिपेत्॥ आसुप्राणान्प्रतिष्ठाप्य पूजयेत्कुसुमादिभिः॥ १२६॥ पश्चात्तस्याश्मीरात्रौ षाममतेभ
तेसति विधायमान्तकान्यासंमंत्रन्यासमनंतरम् १२७॥ त्रिटिमंत्रसमुद्भूतान्चतुर्विंशतिसंख्यकान्॥ ताराद्यान्विन्यसेद्वर्णान्स्था
नेष्वेषु समाहितः॥ १२८॥ मूर्द्धिभालेदृशोश्रुत्योर्नासास्य चिबुकेषथ कंठहृत्स्तनयुग्मेषु कुक्षौ नाभौ कटिद्वये॥ १२९॥ मेढ्रपाणौप्र
विन्यस्यशिष्टवर्णचतुष्टयं॥ ऊरुद्वये जानुयुगे जंघायुग्मे पदद्वये॥ १३०॥ एवं विन्यस्य सर्वांगौ रक्तमाल्यानुलेपनः॥ रक्तवस्त्रधरः शु
द्धःपुत्तलीं दारुणाकृतीं॥ १३१॥ अधोमुखीं खनेत्कुंडे पिष्टजामासनादधः॥ मृण्मयीं प्रतिमां पाददेशे न्यस्येत्तथात्मनः॥ १३२॥ मधूच्छि
ष्टमयीं व्योम्निकुंडस्योर्द्ध्वं प्रलंबयेत्॥ लवणेनकृतां पश्चात्पुत्तलीं संस्पृशन्जपन्॥ १३३॥ न्यस्य पंचकंपथान्यायमष्टोत्तरसहस्रकं संहृत्य
न्त्रिटिमंत्रार्णान्पुनस्तस्यास्तनौ न्यसेत्॥ १३४॥ अंगष्ठसंधिप्रपदजानुजंघारुपायुषु॥ लिंगदेशे पुनर्नाभौ जठरे हृदयांबुजे॥
स्तनद्वये कंधरायां चिबुके वदने पुनः॥ घ्राणयोः कर्णयोरक्ष्णोर्ललाटे मूर्द्धि विन्यसेत्॥ १३६॥ अग्निमादाय संदीप्य साध्यवस्
त्रदारुभिः॥ तस्मिनभ्यर्च्य मंत्रोक्तां देवतां रूप्यपात्रके॥ १३७॥ कुशीतराजिपुष्पाद्भिर्दत्वार्घं प्रणमेत्सुधीः॥ मंत्रैरेतैः प्रयोगाद्
वंते संयतमानसः॥ १३८॥ त्वमनेनाप्यमित्रप्रनिशापांहव्यवाहन॥ हविषा मंत्रजप्तेन तन्नोभवतपासह॥ १३९॥ जातवेदो
महादेवत प्रजांबूनदप्रभ॥ स्वाहापते विपं भस्मलवणादह शत्रुहन्॥ १४०॥ ॐ ईशेशर्वरि सर्वाणि यस्त्वं मनसा त्वया जगत्॥
महादेवि नमस्तुभ्यं वरदे कामदा भव॥ १४१॥ तमोमपि महादेवि महादेवस्य सुव्रते॥ त्रिपामेपुरुषं हत्वा वशमानय देवि मे॥
॥ १४२ ॥ ॐ दुर्गे दुर्गादि रहिते दुर्गसंरोधनाकुले॥ चक्रशंखधरे देवि द्रुष्टशत्रुभयंकरि ॥ १४३ ॥ ० ॥ ॥

होमकाले पुत्तलीछेदप्रकारमाह॥ प्रथमो दक्षिणपाद इति॥ स्वच्छार्थमपरम्॥ प्रयोगांतरमाह॥ मारण इति॥ तुषरांकुशरसृता॥ गृहधूमो वा॥ रामठः हिंगुः॥

नमस्ते दह शत्रुं मे वशमानय चंडिके॥ शाकंभरि महादेवि शरणं मे भवानघे॥ १४४॥ ॐ भद्रकालि भवाभीष्टे भद्रसिद्धिप्रदा
यिनि॥ सपत्नान्मे हन दह शोषय तापय तापय॥ १४५॥ शूलासिशक्तिवज्राद्यैरुत्कृत्योत्कृत्य मारय। महादेवि महाकालि रक्षा
स्मान्नक्षत्रात्मिके॥ १४६॥ साध्यं संस्मृत्य निर्भेद्य पुत्तलीं सप्तधा ततः॥ क्रमात्पंचकं समुच्चार्य जुहुयाद्देधितेनले॥ १४७॥ प्रथ
मो दक्षिणः पादस्तलकरस्तदनंतरम्॥ शिरस्तृतीयमास्यात्तं वामहस्तं ततः परं॥ १४८॥ मध्यादूर्ध्वं पंचमः स्यादधोंशः ष
ष्ठ ईरितः॥ सप्तमो वामपादः स्यादेवं भागक्रमः स्मृतः॥ १४९॥ सप्तसप्तविभागे वा प्रोक्तेष्वेषु यथाविधि॥ हुत्वेवमर्चयि
त्वाग्निं प्रणमेद्दंडवत्ततः॥ १५०॥ यजमानो धनैर्धान्यैः प्रीणयेद्गुरुमात्मनः॥ अनेन विधिना मंत्री वशयेदसुरान्सुरान्॥
१५१ किं पुनर्मनुजान्भूपान्समात्यान्नृपयोषितः॥ मारणे पूर्वसंप्रोक्तं पुत्तलीनां चतुष्टयं॥ १५२॥ निवेशयेद्यथापूर्वं सा
धकेन्द्रो विधानवित्॥ अपरं वक्ष्यमाणेन विधानेन प्रकल्पयेत्॥ १५३॥ वराहपारावतविट्तिलतुषरामठैः॥ त्वरा
रुन्निंबसिद्धार्थसाध्यवामांघ्रिरेणुभिः॥ १५४॥ महिषीमूत्रसंपिष्टैः पूर्वोक्तलवणान्वितैः॥ विधाय पुत्तलीं सम्यक्प्राणस्था
पनमाचरेत्॥ १५५॥ जपपूजादिकं सर्वं कुर्यात्प्रागुक्तवर्त्मना। ततः पूर्वोदिते कुंडे रात्रौ प्रज्वलितेनले॥ १५६॥ दुर्गां वा भद्रका
लीं वा समासाद्य यथाविधि। धारयन्निशितं शस्त्रं सव्यहस्तेन साधकः १५७ वामपादं समारभ्य दक्षिणांघ्र्यवसानकं। छित्वा छित्वा
प्रजुहुयान्निराहारो जितेन्द्रियः १५८ कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशीं॥ अनेनैव विधानेन होमं कुर्याद्विचक्षणः १५९ त्रिसप्त

प्रयोगेन मारयेद्रिपुमात्मनः॥

व्रणकृत् भल्लातकः। स्पर्शार्थमपरम्॥ इति गूढार्थदीपिकायां द्वाविंशः पटलः॥२२॥ त्र्यंबकविधानमाह॥ अथेति। अस्य ऋष्यादयः प्रदर्श्यंते। वशिष्ठोस्य मुनि

कारस्करोथ धात्री स्यादुदुंबरतरुः पुनः। १६० जंबूः खदिरसंज्ञश्च ख्यातौ वंशपिप्पलसंज्ञकौ॥ नागरोहिशनामानौ पलाशप्लक्षसंज्ञ

कौ १६१ श्रीवृक्षविल्वार्जुनाख्या विकंकतमहीरुहाः॥ वकुलः सरलः सर्जो वंजुलः पनसार्कको १६२ शमीकदंबनिंबाम्रमधूकारि

क्षशाखिनः। आत्मरक्षादिकं सर्वं कुर्यान्मंत्री यथा पुरा १६३ अमुना मनुना सम्यगभीष्टफलसाधने। सदृशो नास्ति मंत्रोन्यः सत्य

मेतन्न चान्यथा १६४॥ इति शारदातिलके द्वाविंशः पटलः॥२२॥ अथ त्र्यंबकं मंत्रमभिधास्याम्यनुष्टुभं। यं भजंते नरं कालः स्व

यं वीक्षितुमक्षमः १ वसिष्ठोस्य मुनिः प्रोक्तश्छंदोनुष्टुबुदाहृतं। देवतास्य समुद्दिष्टस्त्र्यंबकः पार्वतीपतिः २ विभक्तैर्मंत्रवर्णैः स्या

त्षडंगानां प्रकल्पना। हृदयं त्रिभिराख्यातं चतुर्भिः शिर ईरितं ३ शिखाष्टभिः समुद्दिष्टा नवभिः कवचं मतं॥ पंचभिर्नेत्रमाख्यातम

स्त्रं त्रिभिरुदाहृतं ४ पूर्वपश्चिमयाम्येन्द्रवक्त्रेषु तदनंतरं॥ उरोगलास्येषु पुनः नाभिहृत्पृष्ठकुक्षिषु ५ लिंगपायूरुहस्तमूलांतजा

नुयुग्मेषु तत्परां तद्वृत्त युग्मे स्तनयोः पार्श्वयोः पादयोः पुनः ६ पाण्योर्नासिकयोः शीर्षे मंत्रवर्णान्न्यसेत्क्रमात्। पदान्येकादश

न्यसेच्छिरोभ्रूयुगलेक्षिषु ७ वक्त्रे गंडयुगे भूयो हृदये जठरे पुनः। गुह्ये ऊरुजानुपादेषु न्यासमेवं समाचरेत् ८ हस्ताभ्यां कलशद्व

याम्रुतरसैराप्लावयंतं शिरो द्वाभ्यां तौ दधतं मृगाक्षवलये द्वाभ्यां वहंतं परं॥ अंके न्यस्तकरद्वयामृतघटं कैलासकांतं शिवं स्व

च्छांभोजगतं नवेन्दुमुकुटं देवं त्रिनेत्रं भजे॥९॥ जपेन्मंत्रमिमं लक्षमेवं ध्याययजितेन्द्रियः॥ जुहुयाद्दशभिर्द्रव्यैरयुतं घृतसंप्लुतैः १०

रित्यादिना वर्णन्यासस्थानमाह। पूर्वपश्चिमेति॥ पदन्यासमाह पदान्येकादशेति। ध्यानमाह॥ हस्ताभ्यामिति॥ द्वाभ्यान्तौ दधतौ द्वाभ्यां हस्ताभ्यां तौ कलशौ अमृत

॥ अर्केंदुरिति शक्तिरीशशक्ती दर्शपति ॥ रामा एकेति । प्रयोगानाह ॥ अमृतमित्यादिना ग्रंथेन शताक्षरमंत्रमुद्धरति ॥ गायत्री त्रिष्टुबित्यादिना स्पष्टार्थमपरम् ॥

विल्वं पलाशं खदिरं वटं च तिलसर्षपौ ॥ दौग्धं दुग्धं दधि तु न दूर्वा तानि विदुर्बुधाः ११ पंचाक्षरोदिते पीठे पूजयेद्वृषभध्वजं ॥ मूर्तिं
मूलेन संकल्प्य वक्ष्यमाणेन वर्त्मना ॥ १२ ॥ पूर्वमंगानि संपूज्य पश्चान्मूर्तीः प्रपूजयेत् ॥ अर्केन्दुवसुधातोयवह्नीरवियदात्मनः ।१३।
द्वितीयावरणे पूज्या मूर्तयोष्टौ क्रमादिमाः ॥ रामा राका प्रभा ज्योत्स्ना पूर्णोषा पूरणी सुधा १४ ॥ अष्टाविमाः क्रमात्पूज्यास्तृतीयावरणे ततः ।
विम्बा विद्या सिता प्रह्वा सारा संध्या शिवा निशा ॥ १५ ॥ चतुर्थावरणे पूज्याः शक्तयोष्टौ क्रमादिमाः ॥ आर्या प्रज्ञा प्रभा मेधा शांतिः कां
तिर्धृतिर्मतिः ॥ १६ ॥ पंचमावरणे पूज्याः क्रमादेतास्ततः परं ॥ धीरा मा पाविनी पद्मा शांता मोघा जया मला ॥ १७ ॥ षष्ठावरणगाः पू
ज्या लोकपालास्ततः परं ॥ एवं कृते प्रयोगार्हो जायते परमहामनुः १८ अयुतं जुहुयाद्बिल्वसमिद्भिः संपदे सुधीः ॥ जुहुयाद्ब्रह्मवृक्षस्य स
मिद्भिर्ब्रह्मतेजसे ॥ खादिरैरयुतं हुत्वा कांतिं पुष्टिमवाप्नुयात् ॥ वटवृक्षस्य समिधो जुहुयादयुतावधि २० धनधान्यसमृद्धः स्यादचिरेणै
व साधकः ॥ तिलैस्तत्संख्यया हुत्वा सर्वपापैः प्रमुच्यते २१ सिद्धार्थैरयुतं हुत्वा शत्रून्विजयते नृपः ॥ अनेनैव विधानेन नश्येन्मृत्यु
रकालजः ॥ २२ ॥ पायसेन कृतो होमो रक्षाश्रीकीर्तिकांतिदः ॥ गोदुग्धेन च शुद्धान्नं हुत्वा कृत्यां विनाशयेत् । २३ । अयमेव मतो हो
मः शांतिश्रीसंपदावहः ॥ दधिहोमेन संवादं कुर्याद्विद्वेषिणो मिथः ॥ २४ ॥ प्रत्यहं जुहुयान्मंत्री दूर्वामष्टोत्तरं शतं ॥ आमयान्निखि
लान्जित्वा दीर्घमायुरवाप्नुयात् २५ ॥ जुहुयाज्जन्मदिवसे पायसान्नैर्घृतान्वितैः ॥ रक्तोन्ननिंदितां लक्ष्मीमारोग्यमतुलं यशः २६
गव्यदुग्धघृताक्ताभिर्दूर्वाभिर्जुहुयाद्वशी ॥ सविंशतिशतं सम्यक् स्वजन्मदिवसे सुधीः २७ आमयैः सकलैर्मुक्तो जीवेद्वर्ष
शतं सुधीः ॥ २८ ॥ ध्यानमाह ॥ सत्यमित्यादिना इतरत्स्पष्टम् ॥ मंत्रांतरमुद्धरति । ऋचोद्धार इत्यादिना लोके प्रसिद्धो मंत्रः ॥ ॥

काश्मरीसमिधस्तिस्रः पयोन्नं त्रिशतं पृथक् २८ जुहुयाद्ब्राह्मणानंते भोजयेन्मधुरान्वितं ॥ प्रीणयेद्धनधान्याद्यैरात्मनो गुरुमादरा
त् ॥ २९ ॥ अनामयमवाप्नोति दीर्घमायुः श्रिया सह ॥ सघृतेन पयोन्नेन हुत्वा पर्वणि पर्वणि ॥ ३० ॥ राज्यश्रियमवाप्नोति षण्मासान्नात्र संशयः
॥ लाजैर्विशुद्धैर्जुहुयात्कन्याप्रैसावराप्नये ३१ क्षीरद्रुमसमिद्धोमाद्ब्राह्मणादीन्वशं नयेत् ॥ स्नात्वा सहस्रं प्रजपेदादित्याभिमुखो मनुं ॥ ३२ ॥
आधिव्याधिविनिर्मुक्तो दीर्घमायुरवाप्नुयात् ॥ अनेन मनुना सर्वं साधयेदिष्टमात्मनः ॥ गायत्री त्रिष्टुबनुष्टुब्वर्णैः प्रोक्तः शताक्षरः पूर्वोक्ता
एव मुन्याद्याः परं तेजोस्य देवता ॥ ३४ ॥ हृन्मयो दशभिः प्रोक्तं रुद्रार्णैः शिरईरितं ॥ द्वाविंशत्या शिखा प्रोक्ता तावद्भिः कवचं मतं ३५ स्यात्पंचदश
भिर्नेत्रमस्त्रं सप्तदशाक्षरैः ॥ वर्णन्यासादिकं सर्वं कुर्यात्पूर्वोक्तवर्त्मना ॥ ३६ ॥ सत्यं मानविवर्जितं श्रुतिगिरामाद्यं जगत्कारणं व्याप्तं स्थाव
रजंगमं मुनिवरैर्ध्यातं निरुद्धेंद्रियैः ॥ अर्कानींद्रमयं शताक्षरवपुस्तापात्मकं संततं नित्यानन्दगुणालयं परतरं वंदामहे तन्महः ॥ ३७ ॥
लक्षमानं जपेदेनमयुतं पायसांधसा ॥ जुहुयाद्घृतसिक्तेन मंत्रविद्विजितेंद्रियः ॥ ३८ ॥ सौरे पीठे यजेत्सम्यग्वक्ष्यमाणविधानतः ॥
आद्यामावृतिमभ्यर्चेत्षडंगैर्देशिकोत्तमः ॥ ३९ ॥ गायत्रीशक्तिभिस्तिस्रः पूजयेदावृतीः क्रमात् ॥ आवृतिः पंचमी प्रोक्ता त्रिष्टुबुद्भूतश
क्तिभिः ॥ ४० ॥ अनुष्टुप्शक्तिभिः प्रोक्तमावृतीनां चतुष्टयं ॥ इंद्राद्यैर्दशमी प्रोक्ता वज्राद्यैस्तत्पराक्रमः ॥ ४१ ॥ एवं सिद्धे मनौ मंत्री भवेद्भा
स्करसन्निभः ॥ सुधालतोद्भवैः खंडैर्जुहुयात्क्षीरसंयुतैः ॥ ४२ ॥ दीर्घमायुरवाप्नोति निराधिर्व्याधिवर्जितः । दूर्वाभिर्घृतसिक्ताभिस्तु
देवफलमाप्नुयात् ॥ ४३ ॥ मधुरत्रयसंसिक्तैर्जुहुयादरुणांबुजैः ॥ महालक्ष्मीमवाप्नोति षड्भिर्मासैर्विधानवित् ॥ ४४ ॥ रक्तोत्पलै
स्त्रिमध्वक्तैर्जुहुयात्सर्वसंपदे ॥ श्रीप्रसूनैः प्रजुहुयाद्रमा यावसतिर्भवेत् ॥ ४५ ॥ ४५ ॥ ४५ ॥

सहस्रं जुहुयान्नित्यं मासमेकं तिलैः शुभैः ॥ भानुसंख्यान्द्विजान्नित्यं भोजयेन्मधुरान्वितैः ॥४६॥ सर्वपापैर्विनिर्मुक्तः सर्वरोगविवर्जितः
॥ कृत्याद्रोहस्य हृद्रोहान्जित्वा दीर्घं सञ्जीवति ॥४७॥ प्रातःस्नानरतो मंत्री जपेन्नित्यं शतं शतं ॥ भानुमालोकयन्सम्यक् सञ्जीवेच्छरदांश
तं ॥४८॥ ताख्याहृतिसंरुद्धं जपेन्मंत्रं शताक्षरं ॥ नित्यमष्टोत्तरशतं निःश्रेयसफलाप्तये ॥४९॥ गायत्र्याद्यं जपेन्मंत्रं सर्वपापविमुक्त
ये ॥ सर्वशत्रुविनाशाय त्रिष्टुबाद्यमिमं जपेत् ॥५०॥ अनुष्टुबाद्यं प्रजपेदायुरारोग्यसिद्धये ॥ शताक्षरो मनुः प्रोक्तः समस्तपुरुषार्थदः
॥५१॥ ऋचो विधानं वारुण्या यथावदभिधीयते ॥ ऋग्वेदे सा समुद्दिष्टा शैवा साद्या मनीषिभिः ॥५२॥ वसिष्ठो मुनिराख्यातश्छन्द
स्त्रिष्टुबुदाहृतं ॥ वरुणो देवता प्रोक्ता तद्वर्णैरंगकल्पना ॥५३॥ अष्टभिर्हृदयं प्रोक्तं सप्तभिः शिर ईरितं ॥ शिखा पञ्चभिराख्याता वस
पौः कवचं मतं ॥५४॥ सप्तभिर्नेत्रमाख्यातमस्त्रं षड्भिरुदाहृतं ॥ सान्त्रेषु संधिषु पदोर्गुदाध्याधारनाभिषु ॥५५॥ कुक्षौ पृष्ठे हृदि कुचे
गल्ले वाह्वस्य संधिषु ॥ वक्त्रे कपोल नासाक्षि कर्णभ्रूमध्यमस्तके ॥५६॥ शिरः सर्वांगयोर्न्यस्येन्मंत्रवर्णान्यथाविधि ॥ चन्द्रप्रभं पंक
जसन्निभं पाशांकुशाभीतिवरं दधानं ॥ मुक्ताविभूषांचितसर्वगात्रं ध्यायेत्प्रसन्नं वरुणं विभूत्यै ॥ ५८ ॥ लक्षमेकं जपेन्मंत्रं पायसे
न दशांशतः ॥ सर्पिःसितेन जुहुयान्मंत्री मंत्रस्य सिद्धये ॥ ५९ ॥ धर्मादिकल्पिते पीठे वरुणं सम्यगर्चयेत् ॥ कृत्वांगपूजनं शेषं वा
सुकिं तक्षकं पुनः ॥६०॥ कर्कोटकं ततः पद्मं महापद्ममनंतरं ॥ शंखपालाख्यकुलिकौ सम्यक्पत्रेषु पूजयेत् ॥ ६१ ॥ इंद्राद्यानायु
धान्येषामर्चयेत्तदनंतरं ॥ ऋणमुक्त्यै जपेन्मंत्रं प्रत्यहं साष्टकं शतं ॥ ६२ ॥ जपेनानेन लभते महतीमव्ययां श्रियं ॥ सितेसु शकले मं
त्री जुहुयाद्घृतसंयुतैः ॥ ६३ ॥ चतुर्दिनं दशशतं मृत्युमुक्त्यै महाश्रियै ॥ समिद्भिर्वेतसोत्थाभिः क्षीराक्ताभिर्दिनत्रयम् ॥ ६४ ॥

॥टिप्पणी॥ पंक्ति १ की ॥ ध्रुवासु त्वासु क्षितिषु क्षियंतो व्यस्मत्पाशं वरुणो मुमोच ॥ अवो वन्वाना अदितेरुपस्थाद्यूयं पात स्वस्तिभिः सदा नः स्वः ॥

अक्षरन्यासस्थानान्याह॥ सर्गेत्यादिना॥ ध्यानमाह। चन्द्रप्रभेत्यादिना॥ मंत्रैरिति॥ येनेति॥ मंत्रमुद्धरति॥ पाशांकुशेत्यादिना॥ स्पष्टार्थ उद्धारः॥ प्रयोगमाह

जुहुयाद्धविसंसिध्यै मंत्रविद्विजितेंद्रियः॥ अनेन विधिना मंत्री सर्वेषां शतभिर्गते॥ ६५॥ चतुःशतं घृतप्लुतं पायसं जुहुयाद्दशी॥ अस
नाशाय संपत्त्यै वश्यारोग्याभिवृद्धये॥ ६६॥ भृगुवारे कृतो होमः पायसेन ससर्पिषा॥ महतीं संपदं कुर्यान्नाशयेत्सकलापदः॥ शा
लिभिर्घृतसंसिक्तैः सरिदंतरितः सुधीः॥ अहं चतुःशतं हुत्वा स्तंभयेत्परसैन्यकं॥ ६८॥ सायं प्रत्यङ्मुखो वह्निमाराध्य प्रजपेन्मनुं॥
चतुःशतं विमुच्येत मंत्री सर्वैरुपद्रवैः॥ ६९॥ मंत्री प्रत्यङ्मुखो भूत्वा तर्पयेद्विमलैर्जलैः॥ सर्वोपद्रवनाशाय समस्ताभ्युदयाप्त
ये॥ ७०॥ बहुना किमिहोक्तेन मंत्रेणानेन साधकः॥ साधयेत्सकलान्कामाञ्जपहोमादितत्परः॥ ७१॥ प्राणप्रतिष्ठामंत्रस्य वि
धानमभिधीयते॥ येन प्राणीरिता मंत्राः प्राणवंतो भवंति ते॥ ७२॥ पाशांकुशपुटा शक्तिर्वाली विंदुविभूषितः॥ पाद्याः सप्तसकारां
ता व्योमसद्येंदुसंयुतं॥ ७३॥ तदंते हंसमंत्रः स्यात्ततोऽमुष्यपदं वदेत्॥ प्राणा इति वदेत्पश्चादिह प्राणास्ततः परं॥ ७४॥ अमुष्य जी
व इह स्थितस्ततोऽमुष्य पदं वदेत्॥ सर्वेन्द्रियाण्यमुष्यांते वाङ्मनश्चक्षुरंततः॥ ७५॥ श्रोत्रघ्राणपदे प्राणा इहागत्य सुखं चि
रं॥ तिष्ठंत्वग्निवधूरंते प्राणमंत्रोऽयमीरितः ७६॥ प्रत्यमुष्यपदं पूर्वं पाशादीनि प्रयोजयेत्॥ प्रयोगेषु समाख्यातः प्राणमंत्रो मनीषि
भिः॥ ७७॥ ब्रह्मविष्णुशिवाः प्रोक्ता ऋषयस्तंत्रवेदिभिः॥ उक्तमृग्यजुषां साम छंदश्छंदोविशारदैः॥ ७८॥ चैतन्यरूपा प्राणाख्या
देवता शक्तिरीरिता॥ कवर्गेणावियत्पूर्वं भूतैर्हृदयमीरितं॥ ७९॥ शिरश्चवर्गशब्दाद्यैः शिखेरिता तदनंतरं॥ ज्ञानेन्द्रियैष्टवर्गाद्यैः शि
खा परिकीर्तिता॥ ८०॥ कर्मेन्द्रियैस्तवर्गाद्यैः कवचं परिकीर्तितम्॥ वचनाद्यैः पवर्गाद्यैर्विलोचनमुदीरितम्॥ ८१॥

येषु विशेषः॥ कर्णपत्रपत्रामुष्यपदमत्र मध्ये॥ तत्र तत्र प्रथमतः। पाशांकुशादिबीजान्युच्चार्य पश्चादमुष्यपदं ब्रूयात्॥ इति कथयति॥ प्रत्यङ्मुखेति॥

अथ सख्यादीनि कथयति॥ अस्मेत्यादिना॥ अंगन्यासप्रकारमाह॥ कव्चेत्यादिना॥ पकारादिदशवर्णन्यासप्रकारमाह॥ सहृदयेत्यादिना॥ एतेन दशकेन दू
जान्नप्रकारमाह॥ षट्कोणेत्यादिना कर्णादिप्रयोगमाह॥ पाशेत्यादिना॥ तस्याः उतल्या हृदये प्राणप्रतिष्ठामंत्रयंत्रसकीटससाध्यं न्यसेत् इत्यन्वयः तस्य

वुध्याद्यैर्पाद्धिसंयुक्तैरस्त्रमस्य समीरितं॥ आत्मनेता समाख्याता अंगमंत्राः सजातिभिः॥८२॥ नाभेश्चरणपर्यंतं पाशवीजं प्रवि
न्यसेत्॥ हृदयान्नाभिपर्यंतं शक्तिवीजं ततः परं॥ ८३॥ मूर्द्धादिहृदयं पावदंकुशं विन्यसेत्ततः॥ हृदये धातुषु न्यस्येद्यादीन्स
प्त यथाक्रमं॥८४॥ प्राणे जीवे ततोन्यस्येद्धंसवर्णद्वयं पृथक्॥ कुर्यान्न्यापकमेतेन समस्तेन विधानवित्॥ ८५॥ ततो विचि
तयेद्देवीं जीवभूतां जगन्मयीं॥ रक्ताब्धिपोतारुणमध्यसंस्थां पाशांकुशाविक्षुसरासबाणान्॥ शूलं कपालं दधतीं कराग्रैरक्तां
त्रिनेत्रां प्रणमामि देवीं॥ ८७॥ एवं ध्यात्वा जगद्धात्रीं लक्षमेकं जपेन्मनुं॥ जुहुयात्तद्दशांशेन चरुभिर्घृतसंयुतैः॥ ८८ षट्को
णाढ्ये शक्तिपीठे विधिनानेन पूजयेत् अर्चयेत्षट्सु कोणेषु ब्रह्माणं विष्णुमीश्वरं॥ ८९॥ वाणीं लक्ष्मीमिमां पश्चात्षडंगानि प्र
पूजयेत्॥ दलेषु मातरः पूज्यास्तद्वाह्ये लोकपालकान्॥ ९०॥ एवं संपूजयेद्देवीं सुगंधिकुसुमादिभिः॥ इति संसाधितो मंत्रः
षट्कर्मफलदो भवेत्॥ ९१॥ स्थापयेन्मनुनानेन प्राणान्सर्वत्र देशिकः॥ वीजांते मुख्यशब्दानामाद्यैर्दूतीः प्रयोजयेत्॥ ९२॥
मृता वैवस्वता भूयो जीवहा प्राणहा ततः॥ आकृष्या ग्रथनी पश्चात्प्रमारा विस्फुलिंगिनी ९३ क्षेत्रप्रतिहरीत्येताः प्राणाद्याः प्रोक्तवः
स्मृताः॥ पाशेन वद्ध्वे हस्य शक्त्या स्वीकृतचेतसः॥ ९४॥ अंकुशेनाहृतस्याभिः साध्यस्यासून्समाहरेत्॥ द्वादशांगुलमानेन कृत्वा
साध्यस्य पुत्तलीं॥ ९५॥ तस्यां प्राणात्मकं यंत्रं सकीटं हृदये न्यसेत्॥ निशीथसमये साध्ये सुप्ते तस्य हृदंवुजे॥ ९६॥ ० ॥

हृदयांवुजे साध्यस्य हृत्पद्मे तद्दलेषु यंथोक्तदिग्दलेषु तत्कर्णिकांतरैव पादीनक्षररूपान्वस्मरेत्॥ भंगाकारान्॥ आत्मीयहृद्येवमेव संस्म ॥ ॥

शा॰ति ष्यभृंगीरूपान्॥ म्वासमार्गैस्तप्रस्थाप्य॥ एकैकं साध्यं हृत्पद्मधृतान् नैकैकमानीपाने नैव यथा पत्तल्या द्वावात्मचितेवस्थापयेत् द्विसद्रसः वह्निवीजेन सर्वतस्त
टी॰शू॰ च्छेदं कुर्यात॥ पूर्वविंदूत्त्येन वश्यादीनां भृंगीरूपान् प्रस्थाप्य॥ साध्यहृदि स्थितान् प्राणानाकृष्य स्वहृदये पुतल्या दोवास्थापनानंतरं वह्निवीजेन रेफेणानत
१११ दलेषु वायुवह्नीन्द्रवरुणानामतः परं॥ ईशराक्षसशीतांशुपमानां कर्णिकांतरे॥ ९७॥ पादीन्हंससमायुक्तान् भृंगाकारान् अनुस्मरन्
शिरोविंदुसमुद्भूतितत्वसंवद्धविग्रहान्॥ ९८॥ एवमात्महृदंभोजे भृंगीरूपान् धियः स्मरेत्॥ आत्महृत्पद्मगांभृंगीप्रस्थाप्य म्वासव
र्त्मना ९९ एकैकं साध्यहृत्पद्माज्जंगमेकैकमानयेत्॥ पुतल्यांस्थापयेन्मंत्री स्वचितेवाविधानवित्॥ १००॥ शत्रुच्छेदं प्रकुर्वीत व
ह्निवीजेन सर्वतः॥ आकृष्टान् साध्यहृद्भृंगान् ध्रुवासंस्तंभयेततः॥ १०१॥ एवमेकादशावृतीः कुर्यात्सर्वेषु कर्मसु॥ वश्याकर्षणयो
यादीन् रुणान्संस्मरेत्सुधीः॥ १०२॥ मोह विद्वेषयोधूम्रान् कृष्णान्मारणकर्मणि॥ पीतां संस्तंभने ध्यायेत्प्राणाकर्षणकर्मणि १०३
आकृष्टान् साध्यहृत्प्राणान् स्थापयेदात्मनो हृदि॥ क्रूरकर्मसु पुत्तल्यां तेषां स्थापनमीरितं १०४ प्राणान् साध्यस्य मंडूकानात्मन
स्तुभजंगमान्॥ संस्मरेत्तत्र निपुणः सदाक्रूरेषु कर्मसु॥ १०५॥ वाय्वग्निशक्रवरुणोग्रसुराजसेंद्रप्रेतेशपत्रलिखितैरथयादिव
र्णैः॥ विंदूतिकैः स्वगतहंससमेतसाध्यप्राणात्मयंत्रमथवर्णावृतं धरास्थं॥ १०६॥ इत्थं प्रयोगकुशलो मननानेन मंत्रवित्॥
वशयेत्सकलान्देवान्किं पुनः पार्थिवाञ्जनान्॥ १०७॥ आवाहन्यादिका मुद्राः प्रवक्ष्यामि यथाक्रमं॥ याभिर्विरचिताभिस्तु मोदं
ते सर्वदेवताः॥ १०८॥ सम्यक्पूरितः पुष्पैः कराभ्यां कल्पितोंजलिः॥ आवाहनी समाख्याता मुद्रा देशिकसत्तमैः॥ १०९॥ एम॰
च्छेदयेदिति॥ तस्यार्थः॥ एकं एकादशवारं प्रति प्रयोगे साध्यहृद्गतप्राणानाकृष्य स्वहृदये पुत्तल्यां दोत्रा स्तंभयेदिति रहस्यं॥ सर्वेषु वश्यादिषु कर्मसुत १११
तत्कर्मसु यादिवर्णान् तत्ज्ञ येन ग्रंथोक्तप्रकारेण ध्यायेत्॥ श्री॥ • श्री• ॥ श्री॥ ॥

यंत्रमाह पद्मेति॥ अयमर्थः त्रिकोणषट्कोणं च विलिख्य तन्मध्ये सकारं॥ तन्मध्ये हं समंत्रं साध्यनामकर्मसहितं विलिख्य बहिः प्राणप्रतिष्ठामंत्रवर्णैर्वृत्तं पश्चान्मा
पात॥ कादिवर्णैश्च धरापूरेणावेष्टितं॥ एतत्प्राणप्रतिष्ठायंत्रं। मंत्रसाधनफलमाह॥ इत्थं प्रयोगकुशल इति॥ अथ नामुद्राः प्रदर्श्यंते॥ आवाहनादीत्यादिना स्य

अधोमुखी कृता सैव प्रोक्ता स्थापनकर्मणि॥ आश्लिष्टमुष्टियुगला प्रोन्नतांगुष्ठयुग्मका॥ ११०॥ सन्निधाने समुद्दिष्टा मुद्रेयं तंत्रवेदि
भिः अंगुष्ठगर्भिणी सैव सन्निरोधे समीरिता॥ १११॥ उत्तानो द्वौ कृती मुष्टी संमुखीकरणी स्मृता॥ देवतांगेषडंगानां न्यासः स्यात्स
कलीकृतिः॥ सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी॥ अवगुंठनमुद्रेयमभितो भ्रामिता सती॥ ११३॥ अन्योन्याभिमुखाश्लि
ष्टकनिष्ठानामिका पुनः॥ तथा च तर्जनीमध्या धेनुमुद्रा समीरिता ११४॥ अमृतीकरणं कुर्यात्तया देशिकसत्तमः॥ अन्योन्यग्रथि
तांगुष्ठा प्रसारितकरांगुली॥ ११५॥ महामुद्रेति परमीकरणे बुधैः॥ आपोजपे इमां मुद्रां देवतायागकर्मणि॥ ११६॥ आदी
क्षांतोपयोगिर्वा दक्षमालेति कीर्तिता॥ तद्वर्णसंख्यैर्मणिभिर्जपमालां प्रकल्पयेत् ११७॥ रुद्राक्षमालिका सूते जपेन स्वमनोरथा
न्॥ पद्माक्षैर्विहिता माला शत्रूणां नाशिनी मता॥ ११८॥ कुशग्रंथिमयी माला सर्वपापविनाशिनी॥ पुत्रजीवफलैः कृप्ता कुरुते
पुत्रसंपदं॥ ११९॥ निर्मिता रौप्यमणिभिर्जपमालेप्सितप्रदा॥ हिरण्मयी विरचिता माला कामान्प्रयच्छति॥ १२०॥ प्रवालैर्वि
हिता माला प्रयच्छेत्पुष्कलं धनं॥ सौभाग्यं स्फटिकी माला मौक्तिकैर्विहिता श्रियं॥ १२१॥ निर्मिता शंखमणिभिः कुरुते कीर्ति
मव्ययां। सर्वैरेतैर्विरचिता माला स्यात्सकलेप्सितं १२२ अथाभिधास्ये तंत्रेस्मिन्संप्रत्युक्तकर्मलक्षणं॥ सर्वतंत्रानुसारेण प्रयो
गफलसिद्धिदं॥ १२३॥ ९९ श्लोकोग्रंथः॥ मुद्राणां फलमाह॥ याभिरिति॥ अथ माला शब्दार्थमाह॥ आदिक्षांतेति॥ अक्षमालाफलमाह॥ रुद्राक्षे
त्यादिनाग्रंथः स्पष्टः॥ वश्यादिषट्कर्मलक्षणमाह॥ अथाभिधास्य इति तान्येव विभजति शांतिरित्यादिना॥ एषां प्रतिकर्मसाधारणरूपमाह॥ गतकृत्यगृहेत्या

कर्मकालेध्यानार्थं पूजार्थं च॥ इजितस्येति। एता देवता दिवसे हृदयमारभ्य कस्यां दिशि कं चित्कालं तिष्ठंतीत्याशंक्य तत्सर्वं दर्शयति॥ स्वदेवतेत्यादिना प्रयोगेषु विशारमाह॥ हेमंतेत्यादिना॥ इदानीमासनमालाप्रदर्श्यते॥ जपाद्युपयोगितपापद्माख्यस्त्यादिना ॥ रुद्राक्षफलधारणमुद्राप्रदर्श्यते॥ षण्मुद्रेत्यादिना तत्त

शांतिवश्यस्तंभनानि विद्वेषोच्चाटने ततः॥ मारणांतानि शंसंति षट्कर्माणि मनीषिणः १२४ रोगकृत्याग्रहादीनां निरासः शांतिरीरिता॥ वश्यं जनानां सर्वेषां विधेयत्वमुदीरितं॥१२५॥ प्रवृत्तिरोधः सर्वेषां स्तंभनं समुदाहृतं॥ स्निग्धानां द्वेषजननं मिथो विद्वेषणं मतं॥ १२६॥ उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्तितं॥ प्राणिनां प्राणहरणं मारणं समुदाहृतं॥ १२७॥ स्वदेवतादिक्कालादीन्ज्ञात्वा कर्माणि साधयेत्॥ रतिर्वाणी रमा ज्येष्ठा दुर्गा काली यथाक्रमात्॥ १२८॥ षट्कर्मदेवताः प्रोक्ताः कर्मादौ ताः प्रपूजयेत॥ ईशचंद्रेंद्रनिरृतिवाय्वग्नीनां दिशो मताः॥ १२९॥ सूर्योदयं समारभ्य घटिकादशकं क्रमात॥ ऋतवः स्युर्वसंताद्या अहोरात्रं दिने दिने॥ १३०॥ वसंतग्रीष्मवर्षाख्यशरद्धेमंतशैशिराः॥ हेमंतः शांतिके प्रोक्तो वसंतो वश्यकर्मणि॥ १३१॥ शिशिरः स्तंभने ज्ञेयो विद्वेषे ग्रीष्म ईरितः॥ प्रावृडुच्चाटने ज्ञेया शरन्मारणकर्मणि १३२ पद्माख्यं स्वस्तिकं भूयो विकटं कुक्कुटं पुनः वज्रभद्रकमित्याहुरासनानि मनीषिणः १३३॥ षण्मुद्राः क्रमतो ज्ञेयाः पद्मपाशगदाह्वयाः॥ मुसलाशनिखड्गाख्याः शांतिकादिषु कर्मसु॥ १३४॥ जल शांतिविधौ शस्तं वश्ये वह्निरुदाहृतः॥ स्तंभने पृथिवी शस्ता विद्वेषे व्योम कीर्तितं १३५॥

॥ भूतोदयं तत्तन्मंडलं च

शांत्यैव ध्यानपूर्वकं कर्तव्यं॥ श्रकयाबि॥ वेदितिमस्यातत्सर्वमाह॥ मंत्रवर्णांतरितेति॥ तत्तद्देवतानां तत्तत्कर्मसमये ध्यानप्रकारमाह॥ सितरुक्मेत्यादि

रतरत्स्यरश्मः॥धतूरकपट्टसूत्रिकरवादिएतत्सर्वे समदुगत्त्वक
॥श्येनाग्नीति॥श्येनाश्येनविष्ठा॥एहगोपिता वा॥अग्निः चित्रकं॥लोष्ठपिंडानिलवणमये॥ इतिगूढार्थदीपिकायां त्रयोविंशः पटलः॥२३॥ समाप्तः॥अथइदानींयंत्राणि
देशकः॥प्रकुर्वीतकर्माणि॥नचान्यथेत्याह॥ देवताकालमुद्रेत्यादिना॥

उच्चाटनेस्मृतोवायुर्भूयोग्निर्मारणेमतः॥तत्तद्भूतोदयेसम्यक्कृततन्मंडलसंपुटं॥ १३६॥ ततत्कर्मविधातव्यंमंत्रिणानिशिता
त्मना॥शीतांशुसलिलाक्षोणीव्योमवायुर्हविर्भुजा॥१३७॥वर्णाःस्युर्यंत्रबीजानिषट्कर्मसुयथाक्रमं॥ ग्रथनंचविदर्भश्चसं
पुटोरोधनंतथा॥१३८॥योगःपल्लवइत्येतेविन्यासाःषट्सुकर्मसु॥मंत्रार्णांतरितान्कुर्यान्नामवर्णान्यथाविधि १३९ ग्रथनंतद्वि
जानीयात्प्रशस्तंशांतिकर्मणि॥मंत्रार्णद्वंद्वमध्यस्थंसाध्यनामाक्षरंलिखेत् १४० विदर्भएषविज्ञेयोमंत्रिभिर्वश्यकर्मणि॥आ
द्यंतेचमंत्रःस्यान्नाम्नोमध्येसंपुटःस्मृतः॥१४१॥एषसंस्तंभनेशस्तइत्युक्तोमंत्रवेदिभिः॥ नाम्नआद्यंतमध्येषुमंत्रःस्याद्रोधनं
मतं॥१४२॥विद्वेषणाविधानेषुप्रशस्तमिदमीरितं॥मंत्रस्यांतेभवेन्नामयोगःप्रोच्चाटनेमतः॥१४३॥ अंतेनाम्नोभवेन्मंत्रःपल्ल
वोमारणेमतः॥शितरक्तपीतमिश्रकृष्णाधूम्राःप्रकीर्तिताः॥१४४॥ वर्णांतोमंत्रसंप्रोक्तादेवताषट्सुकर्मसु। यंत्राणांलेखनद्र
व्यंचंदनंरोचनानिशा॥१४५॥ग्रहधूमचिताङ्गारोमारणोषविषाणिच॥श्येनाग्निलोणपिंडानिधुत्तूरकरसंततः॥ १४६॥गृह
धूमस्त्रिकटुकंविषाष्टकमुदाहृतं॥देवताकालमुद्रादीन्सम्यक्ज्ञात्वाविचक्षणः॥१४७॥षट्कर्माणिप्रयुंजीतयथोक्तफलसिद्ध
ये॥१४८॥ इतिशारदातिलकेत्रयोविंशः पटलः॥२३॥ अथवक्ष्यामियंत्राणांभेदास्तंत्रेषुगोपितान्॥ येसाधयंतिसततंमंत्रिणो
निजवांछितम्॥१॥ निरूपयितुमारभते।अष्टदलंपद्मंलिखित्वातत्कर्णिकायांमकारंतन्मध्येसार्णपूर्तसाध्यनामतन्मध्येलिखेत्॥केसरेषुस ॥ ० ॥
रान् अष्टवर्गान्पत्रेषु।दिक्षुविदिक्षुएकंचतुरस्रंदिकोणंत्वपरंविदिक्कोणं तत्प्रमाणंनिधंसंपुटरूपंकुर्यात॥

पुटितं लिखेत्॥ वहिः सदीर्घैर्गगनैर्हकारैर्वेष्टितं लिखेत्॥ उक्तफलदं॥ पुटीकृत इति॥ पुटीकृतभूमंडलद्वयं॥ विलिख्य तन्मध्ये साध्यसहितां मायां देवदत्तं रक्ष
रक्षशं स्वाग्रपत्रमारभ्य प्रदक्षिणं कर्णिकाभिर्द्वंद्वमुखं लेखनं सर्वत्र ज्ञेयं॥ रेफस्थाने साध्यनाम ईकारे राध कृतदधः कर्मपदं इति सर्वत्र पुनर्वकारयुक्तभूकोणो
नक्षोणीगेहेन वेष्टितं॥ उक्तफलदं॥ अष्टदलकमले स्वरकेसरं कर्णिकायां क्षकारं॥ तन्मध्ये सार्णं विदर्भितसाध्यनाम मृत्युंजयत्र्यक्षरपुटितं लिखित्वा प

मार्णे लिखेत्सार्णयुतं स्वसाध्यं वर्गाष्टपत्रे स्वरकेसराब्जे॥ वहिः सदीर्घैर्गगनैः प्रवीतं रक्षाकरं यंत्रमिदं प्रशस्तं॥ २ पुटीकृते भू
मिपुरस्य युग्मे मायां लिखेन्मध्यगसाध्ययुक्तां॥ वकारकोणेन महीपुरेण संवेष्टितं वश्यकरं तदुच्चैः॥ ३॥ मध्ये सार्णविदर्भितं प्र
पुटितं मृत्युंजयं त्र्यक्षरैः॥ क्षांतस्थां निजसाध्यनाम विलिखेत् किंजल्कसंस्थान् स्वरान्॥ पत्रेष्वष्टसु नाममंत्रपुटितं वर्गांस्तदग्रे
ष्वयो यंत्रं पद्मपुटीकृतं निगदितं मृत्युंजयाख्यं परं॥ ४॥ विषज्वरशिरोरोगनाशनं श्रीजयप्रदं॥ कांतिपुष्टिप्रदं वश्यं सर्वकामार्थ
साधकं॥ ५॥ साध्याढ्यचिंतामणिमग्निगेहे विलिख्य वाह्येऽनलगेहवीतं॥ प्रवेष्टयेत्तत्तु वहिः स्ववर्गैर्मंत्रेण यंत्रं ज्वरशांतिदं स्या
त्॥ ६॥ संस्रवसः स्रावय सोमंत्रो ह्यष्टाक्षर ईरितः॥ ७॥ एवमेव भवेद्रक्षो ग्रहज्वरविनाशने॥ तारद्वयपुटं कुरुकुल्ले मंत्रमनु हुतभु
क्गृहयुग्मे॥ ८॥ मध्यकोणविवरेषु लिखेन्तत् यंत्रमाशु विनिहंति भुजंगान्॥ ॐकारमायादिकमेखलेऽग्निवधूमंत्रं वह्निगृहस्य
युग्मे॥ ९॥ मध्यादिकोणेषु विलिख्य भूर्जे यंत्रं विदध्याद्रिपुनागहारि॥ धूं लां किते वह्निगृहस्य युग्मे धूमावतीमंत्र लिखेत्क्रमेण

त्रे षष्ठस्वस्वरं पुटितं नाम लिखेत्॥ पत्राग्रेषु अष्टवर्गान् अधः॥ उपरि पद्मद्वयेन पुटितं उक्तफलदं॥ त्रिकोणं विलिख्य तन्मध्ये ससाध्यचिंतामणिबीजमग्नि
गेहेन वेष्टयेत्॥ तद्बाह्ये वक्ष्यमाणसंपुटमंत्रे वेष्टितं ज्वरघ्नं॥ सस्वलिकपूर्वाग्रत्रिकोणं विलिख्य षट्कोणं लिखित्वा मध्ये तारं कोणेषु कुरुकुरु स्वाहेति लिखेत्॥

इतिसर्पनिवारणं वह्निगेहयुगंलिखित्वा मध्ये ॐकारं कोणेषु ह्रीं मेखले स्वाहेति लिखेत्। तदेव फलदम्॥ षट्कोणं तन्मध्ये धूमावतीमंत्रं लिखेदक्षरशः। वह्निर्वीज
ग्रहेन वेष्टयेत्॥ रेफेण च तद्बहिर्यकारेण च वेष्टितं॥ प्रेतवस्त्रे विषेण धत्तूररसेन च। काकपक्षेण लिखित्वा रात्रौ श्मशाने निखनेत्॥ शत्रूच्चाटनं। ठद्वयं स्वाहा॥
ततो धूमावती सिद्धा॥ हुताशेति। षट्कोणं लिखित्वा वैवस्वताय स्वाहेति मन्त्रमध्ये कोणेषु च अक्षरशो लिखित्वा चंद्रमंडलेन वेष्ट्य धृतमुक्तफलदा अस्य यन्त्रं

मध्यादिकोणेषु मरुत्गृहस्थं पत्रं हुताशानिलवर्णवीतं। रव्यादिपूर्णां शमनाय नित्यं दांतो साधीशविहंतोवीजे धूमावति द्विठः ११॥
धूमावतीमन्त्रः प्रोक्तः शत्रुनिग्रहकारकः॥ विषेण कनकाम्भोभिः प्रेतकर्पटकल्पितं॥ १२॥ श्मशाने निखनेदेतत् शत्रूनुच्चाटये
द्द्रुतं॥ हुताशगेहद्वितये लिखित्वा वैवस्वताय द्विठवर्णमंत्रं १३ मध्यान्तमाकल्पितमिंदुबिंबे यन्त्रं महाभूतपिशाचवैरिनामा
लिख्य मकारं कोष्ठयुगले कोणेषु तस्या लिखेत् १४ मंत्रस्तोङञणान्नकारसहितान् धूमावतीयन्त्रगान् आवीतं घुघुंटिकादिना पर
मिंद्वा पुत्रिगेहावृतं यन्त्रं प्रोतपरेतभूमिनिहितं विद्वेषणं स्याद्द्विषां १५ पूर्वं घर्घटिके युग्मं ततो मर्कटिके युग॥ घोरे विद्वेष का
रिणि विद्वेषो द्वेषकारिणि॥ १६॥ अथ घोरा घोरपोः स्यादमुकामुकयोस्ततः॥ विद्वेषय द्वयं हुं फट् विद्यात् घुघुंटिकेरिता १७
प्राक्प्रत्यक्दक्षिणोदग्विधिवदभिलिखेत् स्यष्टरेखाश्चतुष्कं कोणेद्यच्छूलयुक्तं वलययुगगतं मध्यपूर्वेत दंत्यं॥ मंत्रस्यार्णा
न परस्तात् वसुपदविवरेष्वष्टवर्णान् लिखित्वा शूलोद्यन्द्वारशार्णो विधिवदभिहितं प्रेतराजस्य यन्त्रम्॥ १८ ॥ १८॥

पद्मं विलिख्य तत्कर्णिकायां मकारं तत्कोष्ठद्वये साध्यनाम मकारं कोणचतुष्टये ङञणन इति लिखेत्। पत्रेषु धूं धूं धूमावती स्वाहा॥ इति लिखेत्॥ हुता द्व
हि घुंघुंटिकादिना वेष्टयेत्॥ तदुपरि वायुमंडलत्रयेण वेष्टयेत्॥ तत्प्रेतवस्त्रेण धत्तूररसेन काकपक्षेण लिखितं श्मशाने प्राप्तर्निहितं शत्रूणां द्वेषकरं॥
घर्घेटिकमंत्रमुद्धरति पूर्वमित्यादिना। प्राक्प्रत्यगिति। नवकोष्ठानि लिख्य कोणचतुष्के शूलानि। मध्यकोष्ठे वलययुगगतं मध्य पूर्वे ॥ ॥

तदंतमिति॥ मध्यादारभ्य यमराजस्तोकं वलयद्वयं यथा भवति तथा लिखेत्॥ अवशिष्टाष्टकोष्ठेषु अग्रतः प्रदक्षिणं वक्ष्यमाणं धूमांधकारावेष्टनं मूलस्थाने व
वक्ष्यमाणद्वादशाक्षरेणावेष्टयेत्॥ धूमांधकारमंत्रमाह॥ उक्तेति॥ द्वादशाक्षरमाह॥ प्रणवमित्यादिना॥ विषवृक्षः कारस्करः॥ अथ विषहिंगुलवणगृह
धूमेत्यादिनाग्रे योक्तः॥ एतच्चान्नमुक्तिफलदं॥ एकाशीतीति॥ एतात्वरिता पटलेस्य शीत्रातम्। चतुःषष्टीति॥ एतदपि पूर्वं गेव्याकृतम् आख्यातम् उव्वक्तीम

यमराजसदोमेयययमेदोरुणयोदययदियोनिरयक्षेययक्षेयच्चनिरामय उक्तो धूमांधकाराय स्वाहेत्यष्टाक्षरो मनुः॥ १९॥ प्रणवं
श्रीं ततो दंष्ट्रान्तत्परं विकृतां ततः॥ आननाय च धूर्वंद्धेमंत्रो यं द्वादशाक्षरः॥ २०॥ विषवृक्षस्य फलके नृचर्मणि पटेथवा॥ आलि
ख्याष्टविषैरेतत् श्मशाने निखनेत् निशि २१ ज्वरेण महता विष्टो मूर्छाकुलितमानसः॥ रिपुर्गच्छति पक्षेण यमलोकं न संश
यः २२ एकाशीतिपदेषु मध्यदहने साध्यं लिखेत् हूं पुनः॥ स्त्रूं भ्रूं ब्रूमिति दिग्गतासु विलिखेत् बीजानि पंक्तिष्वथ २३ शिष्टेषी
शानिशान्त्वरादि विलिखेत् कालो मनुपंक्तिशस्तद्वात्यं यमवीतमग्निपवनावीतं च यंत्रे लिखेत्॥ कालीमाररमालीकालीलमोक्ष
क्षमोनली २४ मामोदेततदेमोमारक्षतत्वतक्षर। कालीमनुरयं प्रोक्तः कालरात्रिः स्ववैरिणां २५ यमामाटटमामायमाटमा
टटमोटमा॥ वामोभूरिरिभूमोवाटटरीस्वस्वरीटट॥ २६॥ यमात्मको यमाख्यातः श्लोको वैरिविनाशनः॥ लिखेदष्टविषोगास्तनिं
बनिर्यासकज्जलैः॥ २७॥ निग्रहाख्यमिदं यंत्रं काकपक्षेण कल्पिते॥ विभीतवृक्षे वल्मीके श्मशाने वा चतुष्पथे॥ २८॥ 

ध्येति॥ अष्टदलं पद्मं विलिख्य जंभादिकां विद्यां वक्ष्यमाणं दिक्पत्रेषु कोणपत्रेषु देवीचतुष्टयं स्तनामकं बहिः पाशांकुशाभ्यां रुतेउक्तफलदम् जंभादि
विद्यां प्रदर्शयति जंभे जंभिनीत्यादिना॥ अयमेव॥ जंभे जंभिनि स्वाहा॥ मोहे मोहिनि। अंधे अंधिनि रुंधे रुंधिनि स्वाहेत्यंतेति सर्वत्र ॥ ७ ॥

एवं जंभादिविद्येतिहित्वा। काममिति। पूर्ववत्पत्रं लिखित्वा तद्वृत्तस्थितं तुंबुरुमध्यगतं काममबीजं विहाय तत्स्थाने शांतिं ईकारं लिखेत्। नृकपाले संध्यासु तापयेत्
॥ उक्तफलसिद्धिः। पूर्ववत् लिखित्वा वर्मफट्कारे ईकारं लिखेत्। वह्निवायुपुतं नाम रेफयकारौ लिखित्वा तन्मध्ये साध्यनाम विभीतकतरुफलके विषसहित
रुधिरेण काकपक्षेण लिखित्वा चत्वरे निखनेत्॥ विद्वेषणकरं। पूर्ववल्लिखित्वा रेफस्थाने पकारद्वयं लिखित्वा मध्ये लकारभूगृहे सावीतं इष्टिकाद्वये निक्षि

दक्षिणास्ये ऽनिले मंत्री निखनेद्दृष्टिरात्रके॥ सर्वथा शत्रुरेतेन समाहान्मरणं व्रजेत् २९ निशृत्यंते महारोगैः पतितो वा भवेद्सौ
शिलापामिष्टिकायां वा चक्रमेतत्प्रकल्पितं॥ ३०॥ मर्कटी विषदंष्ट्रीभिः समालिप्तमधोमुखं॥ यंत्रं रात्रौ खनेत्तत्र भूयो भूयोऽ
शुभं भवेत्॥ ३१॥ लिखेच्चतुःषष्टिपदेषु कालीमीशादिकन्यादिपमात्मकेन। श्लोकेन संवेष्ट्य कृशानुवायुबीजावृतं यंत्रमिदं
विरध्यात्॥ ३२॥ लिप्तं विषमपी दंष्ट्रीमर्कटीभिरधोमुखं॥ लिखनेत्पत्रं तत्र स्यात् नृणामुच्चाटनं सदा ३३ सस्यहानिमनारष्टिं
वीनाशं करोति तत्॥ आरव्यां तुंबुरुमध्यतः स्मरगतामालिख्य जंभादिकां विद्यां दिग्गतपत्रकेषु अथ लिखेत् देवीं दलेषु स्मरं ॥
कोणस्थेषु सनामकं वहिरतः पाशांकुशाभ्यां वृतं यंत्रं वश्यकरं ग्रहादिभयहृत् क्षुद्राभिचारापहम् ३५ जंभे जंभिनि ठद्वंद्वं मोहे मो
हिनि टद्वयं॥ अंधे अंधिनि ठद्वंद्वं रुंधे रुंधिनि ठद्वयं ३६ हत्वा कामं लिखेत् शांतिः यंत्रेऽस्मिन्नृकपालके॥ संध्यासु तापयेदेतद्
द्वैः साध्यं वशं नयेत्॥ ३७॥ ॥प्रं॥ स्तंभनकृत्। पूर्ववल्लिखित्वा लकारस्थाने पकारं लिखित्वा उक्तकर्मकर्तव्येन उक्तफलसिद्धिः पूर्ववल्लि
खित्वा वायुबीजस्थाने फट्कारं यथोक्तफलसिद्धिः यथा पूर्ववल्लिखित्वा फट्कारस्थाने उकारं तत्साध्यर्णसंयुतं लोहचयसमायुक्तं उक्तफलदं॥
पूर्ववल्लिखित्वा उकारं विहाय तत्र गकारं लिखेत्। सकारेण वृतं वहिः पाशांकुशाभ्यां वीतं॥ ठपरेण उकारेण वृतं पुनर्भूपुरेण लकारैर्युतं तद्वहिर्दिक्षु ॥ ॰ ॥ ॰ ॥
क्रमात् कास्त्रैर्वृत्तं॥ तत्सर्वं सूत्रेण वेष्टितं कौशेयनिर्मितं रक्षिका मध्यस्थं॥ यंत्रमुक्तफलदम्॥

हित्वा शांतिं लिखेद्धर्मपरेवानस्वर्मणा॥वह्निवायुगृहावीतं श्मशानस्थं रिपून्हरेत॥३८॥ त्यक्त्वा वर्म लिखेद्रतंफलके ऽस्तत रुद्भवे
॥वह्निवायुयुतं नाम विषाढ्यरुधिरेणतत्॥३९॥ चत्वरे निखनेत्तज्जप्तं विद्वेषं कुरुते मिथः॥ हित्वा रेफयकारौ द्वौ लकारं मध्यतो लि
खेत्॥४०॥ धरापुरेणावीतं तद्दृष्टिकांतन्निवेशितं॥सर्वेषां स्तंभनं कुर्यान्नात्र कार्या विचारणा॥४१॥ हित्वा लकारं तन्मध्ये वायु
वीजं समालिखेत्॥ विषरक्तमशीकाकपुरीषैर्ध्वजवाससि॥४२॥ श्मशाने निहितं कुर्यात्कुलोच्छेदं स्ववैरिणां॥अक्त्वा वायुमयं वी
जं तन्न फट्कारमालिखेत्॥४३॥परेतवस्त्रे काकस्य रुधिरेण यथाविधि॥ ईप्सिते निखनेत्स्थाने विद्वेषं कुरुते नृणां॥४४ अस्य वी
जमपास्यास्मिन्लृकारं सासंसंयुतं॥ विलिखेत्पद्ममेतत्स्यात्लोहत्रयसमावृतं॥४५॥ सर्वरोगप्रशमनं कृत्याद्रोहादिशांतिदं॥ वि
हाय वीजं ल्लृंकारं ग्लौंकारं तत्र संलिखेत् ४५ क्षकारेणावृतं वात्ये पाशांकुशवृतं पुनः॥ठपरेणावृतं भूयो भूमिमंडलमध्यगं॥४६॥ लु
कारैर्विंदुसंयुक्तैर्वेष्टितं तद्धिंक्रमात्॥सर्वांतमात्काबीजं सर्वं वृत्तेन वेष्टितं॥४७॥ कौशेयकर्पटे कूर्मभिषकाद्वय मध्यगं॥सेनाग्रे
निखनेत्पत्रं स्तंभनं कुरुते ध्रुवं ४८ मध्ये श्रीनरसिंहवीजमथ तत्वात्ये स्वरान्केसरे वारीट्चन्द्रयमेंद्रदिक्षु विलिखेत्मध्ये मनुं गा
रुडं॥ अंतस्थान्मरुदग्निनिर्ऋतिशिवेष्वालिख्य वर्णावृतं यंत्रं सर्गिभिरष्टभिः परिवृतं संवर्तकैर्गारुडं॥५०॥ संवर्तको नेत्रयुतः
पार्श्वस्ताराग्निसुंदरी॥गारुडोमनुराख्यातो विषद्वयविनाशनः॥५१॥ स्मरन्गरुडमात्मानं मंत्रमेनं जपेन्नरः॥ विषमालोकनेनैव
हन्यात् नागकुलोद्भवं ५२ मध्ये वर्णान्भयुस्थान् विलिखतु विधिवत्साध्यनाम्ना समेतान् किंजल्केषु स्वराः स्युर्वसुदलविवरेष्वालि
खेन्मध्यवीजं॥५३॥कट्याणीन्केसरेषु द्वियराव सुदले घर्पयेत्।मध्यवीजं यंत्रं संजीवनाख्यं सलिलपरगतं स्युद्द्रोगापहारि ५४

मध्येनृसिंहेति' वसुपत्रंयंत्रकं कृत्वा॥ तन्मध्येनृसिंहवीजंस्वरकेसरंपश्चिमोतरयाम्यपूर्वपत्रेषुमध्येचयथाक्रमंगरुडपंचाक्षरंलिखेत्॥ वायुवह्निराक्षसेश
रपत्रेषुयरलवान्लिखेत॥ वहिर्वर्णैर्वेष्टयेत्॥ तद्वहिरष्टाभिः संवर्तकैः क्षैः परिवृतंयंत्रमुक्तफलदं॥ गरुडमंत्रमाह॥ ॥ संवर्तकोनेत्रइति संवर्तः क्षका
रः॥ ततःक्षिइतिप्रथमाक्षरोमंत्रः॥ मध्यवर्णानिति॥ अष्टदलंपद्मंतत्कर्णिकायांसकारंतन्मध्येसाध्यनामसहितंपत्रवर्णान्विलिख्यकेसरेषुस्वरान्॥ प
त्रेषुकर्णिकागतंवीजं॥ वहिःषोडशदलंचाककारादिवर्णकेसरेतत्पत्रेषपिमध्यवीजंवहिरापमंडलं एतद्यंत्रमुक्तफलदं॥ मध्येपिंडमिति॥ वसुकमले

मध्येपिंडमथोदलादिषुलिखेद्धारीशताराधिपप्रेताधीश्वरशक्रदिक्षुवियतेर्मध्येचवर्णांल्लिखेत्॥ यादीन्मारुतवह्निराक्ष
साशिवेष्वर्णान्वहिर्वेष्टयेत्॥ काद्यैर्वामविलोचनेनकलितंपिंडाख्ययंत्रंपरं॥५६॥ मनुस्वरैर्हनेशाग्निसंयुतश्चतुराननः
पिंडवीजमिदंप्रोक्तंयंत्रंसर्वार्थसाधकं॥५७॥ वीजेनानेनसंजप्तंयंत्रंरक्षाकरपरं॥ आयुरारोग्यजननंलक्ष्मीसौभाग्यवश्यदं
चौरसर्पमृगव्यालभूतापनिकृंतनं॥ गर्भरक्षाकरंस्त्रीणांपुत्रदंक्षुद्रनाशनं॥५९॥ धृतंमूर्ध्नि करोत्येतत्लोकवश्यमनुत्तमं
॥ मध्यतोपगृहेस्यकारविवरेसार्णाढ्यसाध्यंलिखेत्पत्रेषषट्सुहंसमंत्रमभितोहंसार्णसंवेष्टितं॥ यंत्रंभूमिगृहेणवेष्टितमि
दंमूर्ध्नि सदाधारितंहन्यात्क्षुद्रमहाज्वरामयरिपून्दद्यात्यशः संपदं॥ ६१ ॥ ११ लिखित्वामध्येपिंडवीजंपश्चिमोत्तरदक्षिणा

पूर्वपत्रेषुमध्येचयथाक्रमंगारुडाक्षराणिमरुतवह्निनैर्ऋत्येशानपत्रेषुयथा क्रमंयादीन्॥ वहिर्वेष्टयेत् कादिभिः॥ यमलोचनईकारेणयुक्तः॥
पिंडयंत्रमुक्तफलदं॥ पिंडवीजमुद्धरति॥ मनुस्वरैर्हेति॥ औकारेण अनेनसरेफसंयुतः॥ अजेशः ऊकारः॥ चतुराननः जकारः॥ एतैः पिंडितं
पिंडवीजं॥ ततः क्षेत्रेतिभवति॥ मध्येतोपमिति॥ अष्टदलंपद्मंतन्मध्येआपमंडलं॥ तत्रतकारं तन्मध्येसार्णंसयुक्तम्॥ साध्यनामापत्रेषुषट्सुहंसमंत्रं॥
अभितोवर्णवेष्टितम्॥ भूगृहेणच॥ यंत्रंयथोक्तफलदम्॥ श्री॥ ° श्री॥° श्री॥ ° ॥ श्री॥ ° ॥

॥अष्टपत्रपद्ममध्येएकारंससाध्यंपत्रेषुपितदेव उपरिवेष्टनमपितद्वदगृहेण॥पिवेष्टितं॥यंत्रंवश्यदं॥मध्येति॥भूगृहमध्येहंवैलकारमध्येसाध्यंवहिर
ष्टपत्रेषुणांतंतकारंनामवर्णवीतंलिखेत्॥पुनर्भूविंवेनवेष्टयेत्॥वात्येवकारेणच॥यंत्रंज्वरघ्नं॥टांतरति॥प्रणतिपत्रकमलमध्येनामगर्भितंटकारेक्षकारवि
वरेलिखेत्॥मृत्युंजयप्रत्यक्षरंरुद्रम्॥अष्टपत्रेषुसाध्यनामपूर्ववत्॥स्वरकेसरेषोडशपत्रेपूर्ववत्नामलिखेत्॥तद्बाह्येद्वात्रिंशद्दलेपितथैव॥तत्के——

एकारमध्येविलिखेत्ससाध्यंतमष्टपत्रेषुपुनर्विलेख्य॥ संवेष्टयेत्तेनधरापुरस्थं यंत्रंभवेत् वश्यकरंनराणां ॥६२॥ताम्र
पात्रेसमालिख्य यंत्रमेतत्त्र पूजयेत्॥वशयेत्सकलान्मर्त्यान्नात्रकार्याविचारणा॥६३॥मध्येभांतं भृगुविनिहितं नामवर्णैः
प्रवीतंटांतंलांतान्वितमथवलिखेदष्टपत्रेषुभूयः ६४ भूविंबस्थं निगदितमिदं साधुसंजीवनाख्यं शस्त्रोद्भूतं भयमपहरेत्
धार्यमाणंभुजेन ६५ वर्णावृतंसाध्ययुतंसकारंटांतेलिखेदष्टदलेषुहंसं॥ आवेष्टयेद्दंतुगृहेणवात्येलांतावृतंयंत्रमिदंज्व
रघ्नं ६६ यंतेनामलिखेत्क्षकारविवरेमृत्युंजयप्रत्यक्षरी॥ रुद्रंतद्वहिरष्टपत्रविवरेसाध्याह्वयं पूर्ववत्॥६७॥ अथकिंजल्क
युतेवसुदलपद्मेतथैवाह्वयंद्वात्रिंशद्दलपङ्कजेप्यितथाकायार्णयुक्केसरे॥ ईकारेणसमावीतंयंत्रंमृत्युंजयाह्वयं ६८
सर्वरोगाभिचारघ्नंसर्वसौभाग्यसिद्धिदं॥ग्लौंरुद्रंप्रणवद्वयं परिलिखेत्साध्यस्यनामान्वितं॥ वात्येभूपुरमष्टवज्रविलसत्का
रंलिखित्वापुनः॥६९॥क्रोंकोणेषुदिशासुलंप्रविलिखेत्पाशांकुशत्र्यक्षरी वीतंस्तंभनयंत्रमावृत्तिलसज्जंभादिविद्याष्टकं ७०

ग्लौ =

सरेषुकादिवर्णान्॥ईकारेणसमावीतंयंत्रंतत्फलदं॥सौंरुद्रमिति॥भूपुरमध्येप्रणवद्वयं॥तत्पार्श्वयोः ग्लौंद्वयंसाध्यनामसहितं॥वहिरष्टवज्रम
ध्येप्रणवयुतं॥पुनर्भूपुरकोणेषुक्षकारं॥दिक्षुलं॥पाशांकुशत्र्यक्षरवीतं॥वहिः॥तद्बहिर्जृंभाष्टकमंत्रवीतं॥स्तंभवीजवृतं॥जंभाष्टकमुद्रति॥

॥भूपुरंलिखित्वामध्येसाध्यनामसहितंस्वकारंतद्बाह्येषट्सुदिक्षुतथैवलिखित्वासर्पद्वयम्।अन्योन्यहृद्वंलि
जृंभेवह्रीत्यादिना॥उक्तार्थमेव॥पूर्वंलांतेनामेति॥विशिवनिमील्येलिखितंद्विषांवाग्बंधनं॥विरुद्धेसाध्याख्यमिति।अष्टपत्र
खेत॥वहिस्तत्तु त्वयोर्मध्येसाध्यनामाक्षराणि।विभीतफलकेलिखितंयंत्रंशिवनिमील्येलिखितंद्विषांवाग्बंधनं

जृंभेवह्निवधूः पूर्वपश्चाज्जृंभिनिठद्वयं॥मोहेपावकजायास्याततोमोहिनिठद्वयं॥अंधेह्नतभुजोजायाततोंधिनिटयुग्मकं॥रु
ंधेरुधिनिठद्वयं संयुतं॥७२॥लांतेनामविदिक्ष्वदिक्षुविलिखेत्भूपस्तमेवाष्टसुक्षोणीविंबमथोनगेंद्रभुज
ङ्गेशानुपत्नीस्यात्रुंधिनिह्विठसंयुतं॥७२॥लांतेनामविदिक्ष्वदिक्षुविलिखेत्भूपस्तमेवाष्टसुक्षोणीविंबमथोनगेंद्रभुज
गावन्योन्यवद्धौलिखेत्॥आख्यांतत्तुखयोर्विभीतफलकेर्यंत्रंसमापादितंनिर्माल्येनिहितंसदाविततुतेवाचांद्विषांस्तंभनं।
॥७३॥साध्याख्यांकवचंलिखेत्वहिरथोदिक्पत्रमध्येषुतत्ग्लौमन्येषुमहीपुरस्यविलिखेत्कोषेषुरांतान्वितं॥वज्रेषष्ट
सुवर्मतोपपुरस्थंभूविंबमध्येस्थितं यंत्रंरात्रिविनायकांतरगतंन्यस्येच्छ्रावद्वये॥७४॥ रहस्यस्थाननिक्षिप्तंपूजितंप्रतिवा
सरं॥स्तंभनंकुरुतेवाचांसेनादीनांचवैरिणां ७५ कृत्वारेखाष्टकमृजुपुनस्तिर्यगालिख्यपट्टकंवात्याचृत्यालिखतुविधि
वत्विंदुयुक्तंसकारं ७६ अंतःपंक्तौलिखतुधरणीशिष्टकेषुत्रपाणां॥कृत्वानामप्रथितमुदितेयंत्रमेतज्ज्वरघ्नं ७७ यंत्रमे
तत्समभ्यर्च्यदत्वाभूतवलिंततः॥साध्यस्यमूर्ध्निविधृतात्सर्वज्वरविमुक्तये ७८ तारंलिखेद्ध्रिपुरस्थयुग्मेतत्याश्चयो
लौस्फेमथाम्बिवीजं॥कोणेषुपूर्वापरयोश्चयंत्रंपाशांकुशावीजमिदंज्वरघ्नं ७९ यंत्रमभ्यर्च्यमंत्रेणतारपाशांकुशात्मना॥
निवधीयाज्ज्वरार्तस्यहस्तौदोज्वरशांतये॥८०॥पिंडेलिखेत्नामससर्गयांतविदर्भितंसस्वरकेसराढ्यं॥रान्ताष्टपत्रंनसु
धापुरस्थंकांतिप्रदंयंत्रमिदंज्वरघ्नं॥८१॥ ८२ पद्मंलिखित्वाहुंकारमध्येसाध्यनामलिखित्वादिक्पत्रेषुतद्वाग्लौं॥अन्यपत्रेषुतद्
परिभूविंबकोणेषुलिखितंरंउपरिपर्यंतत्पत्रेषुहुंकारांतद्बहिः॥ अथमंडलंतद्बहिर्भूविंवंएतद्यंत्रंनिशाविनायकमध्येक्षिपेत् ॥ ० ॥ ॥

शा·ति· तारादिलुह्यपजलद्विठवर्णवीतायंतांतरेविलिखिताविधिनैवमाया॥साध्यावृताबहिरथोवदनाद्वैचंद्रैर्यंत्रंशिशोरुरुदितांविनिहं
शे·गू· तिसद्यः॥८२॥व्योमार्णमालिख्यसबिंदुमाख्याविदर्भितंस्त्रत्रपयुतकोणे॥वसुंधरागेहयुगेनिबद्धंयंत्रंसमस्तज्वरनाशनंस्यात्
११७ सांभनामविदर्भितंपरिलिखेत्वात्येष्टपत्रेभूर्जपद्मंस्यादथकादिशांतलिपिमत्त्रिंशद्दलेवात्यतः॥वीतंततोयपुरेणयंत्रमुदितं
भूर्जोदरेकल्पितंभूतव्याधिमहाज्वरप्रशमनंकृत्यापहंश्रीप्रदं॥चक्रेचतुःषष्टिपदेषुविंदुनेतस्यवर्णाननुक्रमशोविलिख्य॥रे
खाशिरःकल्पितशूलयुक्तेयंत्रेशपीतज्वरशांतिहेतोः॥८५॥त्रुटितभूमिपुरद्वयमध्यतःप्रविलिखेत्वनितांगिरिजापतेः॥प्रणव
वमस्यलिखेत्वसुकोणगांज्वरहरंपरमेतदुदीरितं॥८६॥वाग्मेलिखेन्नामशशांकमध्येरांतंवहिर्भूमिपुरंपुरस्तात्॥चक्रावृतंयं
त्रमिदंसमस्तंवश्यापमृत्युसकलार्तिशांत्यै॥८७॥सस्वस्तिकेदहनगेहयुगेससाध्यांमायांलिखेत्ललितनागलताद्वलांतः॥पा
शांकुशावृतमिदंनिशितापयेत्योमंत्रंजपन्व्रजतितंस्वयमेवसाध्यः॥८८॥षट्कोणेनिजसाध्यनामसहितांमायांलिखेन्मध्यत
स्तत्कोणेषुविदर्भितामभिलिखेत्शक्तिंस्वसाध्याख्यया॥वात्येभूमिपुरेसकोणमदनंतांबूलपत्रेकृतंजप्तंखादयतःप्रियानि
शिभवेत्सातस्यवश्याचिरं॥८९॥शक्तींनामलिखेत्चतुर्भिरभितोवीजैःसमावेष्टयेत्॥वीतंशक्तिमनोभवांकुशमहंक्रौंवीज
कैःपिष्टजे॥रूपेसाध्यनरस्यजप्तपवनेत्रिःसाङ्गनाभर्ज्यतत्खादेत् तस्यवशंप्रयातिनियतंसाध्यःसदादासवत्॥९०॥कामं राम·
लिखेत्साध्ययुतंसरोजेस्वरोल्लसत्केसरवर्गपत्रे॥उदीरितंमन्मथयंत्रमेतत्सौभाग्यलक्ष्मीविजयप्रदायि॥९१॥का ११७
श्मीररोचनालाक्षामृगेभमदचन्दनैः॥विलिखेत्हेमलेखन्यायंत्राण्येतानिदेशिकः॥९२॥

भूमिस्पर्शं शवस्पर्शं दग्धं निर्माल्यसंगतं ॥ विशीर्णं लंघितं मंत्री यंत्रं जातु न धारयेत् ॥९३॥ अथानंदमयीं देवीं शब्दब्रह्मस्वरूपिणीं ।
॥ ईडे सकलसंपत्त्यै जगत्कारणमंबिकां ॥९४॥ आद्यामशेषजननीमरविंदयोनेर्विष्णोः शिवस्य च वपुः प्रतिपादयंतीं ॥ सृष्टिस्थि
तिक्षपकरीं जगतां त्रयाणां स्तुत्वा गिरं विमलयाप्यहमंबिके त्वां ॥९५॥ पृथ्व्या जलेन शिखिना मरुतांबरेण होत्रेन्दुना दिनकरे
ण च मूर्तिभाजः ॥ देवस्य मन्मथरिपोरपि शक्तिमत्ता हेतुस्त्वमेव खलु पर्वतराजपुत्रि ॥९६॥ त्रिःस्रोतसः सकललोकसमर्चि
तायावैशिष्ट्यकारणमवैमि तदेव मातः ॥ त्वत्पादपंकजपरागविचित्रितासु शंभोर्जटासु सततं परिवर्तनं यत् ॥ ९७ ॥ आनं
दयेत्कुमुदिनीमधिपः कलानां नान्यामिनः कमलिनीमथ नेतरां वा ॥ एकस्य मोदनविधौ परमेकमीशे त्वं तु प्रपंचमभिनं
दयसि स्वदृष्ट्या ॥ ९८ ॥ आद्याप्यशेषजगतां नवयौवनासि शैलाधिराजतनयाप्यतिकोमलासि ॥ त्रय्याः प्रसूरपि तया
न समीक्षितासि ध्येयासि गौरि मनसो न पथि स्थितासि ॥ ९९ ॥ आसाद्य जन्म मनुजेषु चिरात् दुरापं तत्रापि पाटवमवाप्य
निजेन्द्रियाणां ॥ नाभ्यर्चयंति जगतां जननि त्वां निःश्रेणिकाग्रमधिरुह्य पुनः पतंति ॥ १०० ॥ कर्पूरचूर्णहिमवा
रिविलोलितेन ये चन्दनेन कुसुमैश्च सुजातगंधैः ॥ आराधयंति हि भवानि समुत्सुकास्त्वां ते खल्वशेषभुवनाधिभुवः प्रथंते
१०१ आविश्य मध्यपदवीं प्रथमे सरोजे सुप्ताहिराजसदृशी विरचय्य विश्वं ॥ विद्युल्लतावलयविभ्रममुद्वहंती पद्मानि पंच वि
दलय्य समनुवाना १०२ तं निर्गतामृतरसैरभिषिक्तगात्रा मार्गेण तेन विलयं पुनरप्यवाप्ता ॥ येषां हृदि स्फुरसि जातु न ते भवेयु
र्मातर्महेश्वरकुटुंबिनि गर्भभाजः ॥ १०३ ॥ आलंबिकुंतलभरामभिरामवक्त्रामापीवरस्तननतां तनुवृत्तमध्याम् ॥ ॥ ०

शा॰ ति॰ त्विंतास्मस्तूत्रकलशालिखिताढ्यहस्तामावर्तयामि मनसा तव गौरि मूर्तिं ॥ १०४ ॥ आस्यायपयोगमवजित्य च्चैरिवट्कमावध्य
टी॰ गू॰ च्चेन्द्रियगणां मनसि प्रसन्ने ॥ पाशांकुशाभयवराढ्यकरां सुरक्तामालोकये त्रिभुवनेश्वरि योगिनस्त्वां ॥ उत्तप्तहाटकनिभा करि
११८ भिश्चतुर्भिरावर्जितामृतघटैरभिषिच्यमाना ॥ हस्तद्वयेन रुचिरेन लिनेव हंती पद्मापि साभयवरा भवसि त्वमेव १० श्रष्टाभि
रुपविविधायुधवाहिनीभिर्द्वेवल्लरीभिरधिरुत्यमगाधिराजं ॥ दूर्वादलद्युतिरमर्त्यविपक्षपक्षान्न्यक्कुर्वती त्वमसि देवि भवा
निदुर्गा ॥ १०७ ॥ आविर्निदाघजलशीकरशोभिवक्त्रां गुंजाफलेन परिकल्पितहारयष्टिं ॥ पत्रांशुकामसितकांतिमनंगतंत्रामाद्यां
पुलिंदतरुणीमसकृत्स्मरामि ॥ १० ॥ हंसैर्गतिक्वणितनूपुरदूरमुग्धैर्मूर्तैरिवाढ्यवचनैरनुगम्यमानौ ॥ पद्माविवोर्द्ध्वमुखरू
ढसुजातनालौ श्रीकंठपत्नि शिरसैव दधे तवांघ्री ॥ १०८ ॥ द्वाभ्यां समीक्षितुमतृप्तिमतेव दृग्भ्यामुत्पाद्य भालनयनं वृषकेतने
न ॥ सांद्रानुरागतरलेन निरीक्षमाणो जंघे उभे अपि भवानि तवानतोस्मि ॥ १०९ ॥ ऊरू स्मरामि जितहस्तिकरावलेपौ स्थौल्येन
पांडुरतया परिभूतरंभौ ॥ श्रोणीभरस्य सहनौ परिकल्प्य दत्तौ स्तंभाविवांगवयसा तव मध्यमेन ॥ ११० ॥ श्रोण्यौ स्तनौ च युग
गपत्प्रथयिष्यतोञ्चैर्वोल्यात्परेण वयसा परिकृष्टसारः ॥ रोमावलीविलसितेन विभाव्यमूर्तिर्मध्यस्तव स्फुरतु मे हृदयस्य
मध्ये ॥ १११ ॥ सख्युः स्मरस्य हरनेत्रहुताशभीरोर्लावण्यवारिभरितं नवयौवनेन ॥ आपाद्य दत्तमिव पल्वलमप्रधृष्यं नाभिं राम॰
कदापि तव देवि न विस्मरेयं ॥ ११२ ॥ ईशोपगूहपिशुनं भसितं दधाने काश्मीरकर्दममनुस्तनपंकजे ते ॥ स्नानोत्थित ११८
स्य करिणः क्षणलब्धफेनौ सिंदूरितौ स्मरपतेः समदस्य कुंभौ ॥ ११३ ॥ कंठातिरिक्तगलदुज्ज्वलकांतिधाराशोभौ ॥ ॥

शरावद्वये संस्थाप्य रहस्यस्थाने निक्षिप्य प्रतिदिनं पूजयेत्॥ पीतपुष्पाद्यैः रिपूणां वाक्स्तंभनं कुरुते भृशं नम
उक्तफलदं॥ निशाविनायको हरिद्राविनायकः। शरावद्वये संस्थाप्य रहस्यस्थाने निक्षिप्य प्रतिदिनं पूजयेत्॥ पीतपुष्पाद्यैः
देहः। अतिरोहितार्थमपरम्॥ इति श्रीगूढार्थदीपिकायां चतुर्विंशतितमः पटलः॥२४॥ इदानीं मोक्षेतरपुरुषार्थकामिनां तदुपयोगभूतानन्तपहोमप्रयो
गादिकानभिधाय मुमुक्षूणां तदुपायभूतयोगं तदङ्गैः सविस्तरं निरूपयितुमारभते॥ अथ योगमित्यादिना॥ योगोपि मतभेदादनेकधा॥ तत्र प्रथमं प्रधा

भुजौ निजरिपोर्मकरध्वजेन॥ कंठग्रहाय रचितौ किल दीर्घपाशौ मातर्मम स्मृतिपथं न विलंघयेथाः ११४ त्वत्पादपङ्करुचिरकं
चविलासचौर्यैर्भूषाभरेण विविधेन विराजमानं॥ कंठं मनोहरगुणं गिरिराजकन्ये संचिंत्य तृप्तिमुपयामि कदापि नाहम्॥
११५ अत्यायताक्षमभिजातललाटपट्टं मंदस्मितेन दरफुल्लकपोलरेखं॥ बिंबाधरं वदनमन्नदीर्घनासं यस्ते स्मरत्यसकृदे
दस एव जातः॥११६॥ आविस्तुषारकरलेखमनल्पगंधपुष्पोपरिभ्रमदलिव्रजनिर्विशेषं॥ यश्चेतसा कलयते तव केशपाशं त
स्य स्वयं गलति देवि पुराणपाशः॥११७॥ स्तुतिमुचरितपाकं धीमतां स्तोत्रमेतत् पठति य इह मर्त्यो नित्यमार्द्रांतरात्मा॥११९॥
स भवति पदमुच्चैः संपदां पादनम्रक्षितिपमुकुटलक्ष्मीलक्षणानां चिराय॥१२०॥ इति श्रीशारदातिलके चतुर्विंशतितमः पट
लः २४॥ अथ योगं प्रवक्ष्यामि सांगं संवित्प्रदायकं॥ ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः॥ १॥ जीवात्मनोरभेदेन प्रति
पत्तिं परे विदुः शिवशक्त्यात्मकं ज्ञानं जगुरागमवेदिनः॥२॥ पुराणपुरुषस्यान्ये ज्ञानमाहुर्विशारदाः॥ जित्वादावात्मनः श
त्रून्कामादीन्योगमभ्यसेत्॥३॥ कामक्रोधौ लोभमोहौ तत्परं मदमत्सरौ॥ वदंति दुःखदानेतानरिषड्वर्गमात्मनः॥४॥

नभूतं वेदांतसिद्धांतसिद्धं। अप एतत्तेनाह। ऐक्यम्॥ जीवात्मनोरिति॥ आगमिकानां मतमाह॥ शिवशक्तीति॥ वैष्णवमतमाह॥ पुराणेति॥ एतेषां स्व
रूपं पृथक् पृथक् स्तोत्ररूपेणादर्शयिष्यते॥ इदानीं तत्साधनानि प्रथमं निरूपयति॥ जित्वेत्यादिना॥ अरिषड्वर्गं दर्शयति॥ कामक्रोधेति॥ कथमेतेषां

शाउजयोपायमाह। योगाष्टांगैरिति॥ तान्येव विभज्य दर्शयति॥ यमनियमेत्यादिना॥ यमाः प्रदर्श्यंते॥ एवं दीक्षावुसर्वोगुरुः॥ शिष्यं प्रबोधयेत्॰ सबो
धितो बोधितश्चेत्यातान्यथा दीक्षितो भवेदित्युक्तेः॥ योगं विना दीक्षा निर्वाहात्॥ सूर्यमंदेच प्रयोगविषये॥ अनेकप्रकाराउक्ताः॥ तेषां चज्ञानोपयोगं वक्तुं
प्रतिजानीते। अथेति सांगं यमनियमादियुक्तम्॥ वेदांतपक्षमाश्रित्याह॥ ऐक्यमिति॥ तच्चतत्वमसीत्यादिवाक्यसिद्धं॥ शैवमतमाह। शिवेति। प्रतिपत्ति।

योगाष्टांगैरिमान्जित्वा योगिनो योममाप्नुयुः॥ यमनियममासनप्राणायामौ ततः परं॥ ५॥ प्रत्याहारं धारणाख्यं ध्यानं सार्द्धं स
माधिना॥ अष्टांगान्याहुरेतानि योगिनो योगसाधने ६॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्यं कृपार्जवं॥ क्षमा धृतिर्मिताहारः शौचं चे
तियमा दश ७ तपः संतोषआस्तिक्यं दानं देवस्य पूजनं॥ सिद्धांतश्रवणं चैव ह्री मतिश्च जपो हुतं ८ दशैते नियमाः प्रोक्ताः यो
गशास्त्रविशारदैः। पद्मासनं स्वस्तिकाख्यं वज्रं भद्रासनं तथा ९ वीरासनमिति प्रोक्तं क्रमादासनपंचकं॥ ऊर्वोरुपरि विन्यस्य सं
म्यक् पादतले उभे॥ १०॥ अंगुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात्ततः॥ पद्मासनमिति प्रोक्तं योगिनां हृदयंगमं ११ जानूर्वोरंतरे सं
म्यक् कृत्वा पादतले उभे॥ ऋजुकायो निशेद्योगी स्वस्तिकं तत्प्रचक्षते १२ शीवन्याः पार्श्वयोन्यस्ये द्गुल्फयुग्मं सुनिश्चलं॥ वृषणा
धः पार्श्वपादौ पाणिभ्यां परिबंधयेत्॥ १३॥ भद्रासनं समुद्दिष्टं योगिभिः पूजितं परं॥ ऊर्वोः पादौ क्रमान्न्यस्येज्जान्वोः प्रत्यङ्मुखां
गुली १४ करौ निदध्यादाख्यातं वज्रासनमनुत्तमं। एकपादमधः कृत्वा विन्यस्योरौ तथेतरं १५ ऋजुकायो विशेद्योगी वीरास
नमितीरितं इडया कर्षयेद्वायुं बाह्यं षोडशमात्रया १६ धारयेत्पूरितं योगी चतुःषष्ट्या तु मात्रया॥ सुषुम्णामध्यगं सम्यक् द्वा
त्रिंशन्मात्रया शनैः॥ १७॥ ज्ञौनं। परेशैवाः। उत्तराम्नायमतमाह॥ शिवेति॥ शिवशक्त्यात्मकं॥ तयोरभेदाच्चतदित्यर्थः॥ भेदवादिमतमाह॥ पु ११९
राणेति। अन्ये वैष्णवाः॥ उरुषः सांख्यमते॥ ईश्वरो न्यायमते॥ नारायणो वैष्णवमते॥ तत्र पूज्यत्वात्प्रथमोपन्यस्तत्वाद्यमतं यदुक्तं मतमिति गम्यते॥

कामेति। स्त्रीभोगाद्यभिलाषः कामः। सत्कदिजिज्ञासा क्रोधः। धनादितृष्णा लोभः। तत्वाज्ञानं मोहः॥ अहं सुखी धनी विद्यावानिति गर्वः। अन्यशुभद्वे
षो मत्सरः॥ दुःखदानेच्छा नात्मनो रिपुवर्गमाहुरित्यन्वयः॥ आत्मनः स्वरूपचिंताव्यापारविशेषमनशत्रुत्वं एतदुपायमाह॥ योगेतितान्याह। समितिक्रमा
देषां स्वरूपमाह। अहिंसेति। चौर्यनिवृत्तिरस्तेयः। स्त्रीभोगेच्छादिनिवृत्तिः। ब्रह्मचर्यं प्राणिषु क्रूरचित्तनिवृत्तिः क्रिया। चित्तकौटिल्यनिवृत्तिरार्जवं। अभिभाक्कं
प्रतिश्रक्रोधः॥ प्रणवचिंतता क्षमा। परद्रव्यस्वाद्यभिलाषः चिंता। अभावोधृतिः। सर्वानुशाका अहिंसा। ब्रह्मचर्याभ्यासः कामस्य जयः। कृपाक्षमाभ्यां क्रोध
स्यच स्तेयसत्यार्जवेभ्यो लोभस्य मिताहारशौचाभ्यां मोहस्य क्षमार्जवाभ्यां मदस्य. अहिंसाकृपार्जवक्षमाभ्यो मत्सरस्य। असदपि यथार्थत्वं। तपइतिश
च्छादिव्रतकर्म। तपवल्लिष्टतरावभिलाषः। संतोषः। अस्ति परलोक इति मतिर्यस्य स आस्तिकः। तत्समावः अस्त्यत्र परलोक उध्याय धर्माद्याचरणमिति
यावत्। यथाविभवं देवपितृमनुष्येभ्यो देशेन वितरणं दानं देवस्य पूजनयुक्तरीत्या सिद्धांतमुपनिषत्। मोक्षोपायोपदेशि परिमन्वादिशास्त्रं तस्य श्रव
णं। ह्रीर्लज्जा कुत्सिताचारात्॥ ततउद्देशः। मतिर्मननं। तथा च श्रुतिः। श्रोतव्यः श्रुतिवाक्येभ्यो मंतव्यश्चोपपत्तिभिरिति॥ जपउक्तप्रकारः॥ जपतोनास्तिपा
तकमित्युक्तेः॥ चित्तशुद्ध्यावप्रयोगाद्धुतमग्निहोत्रादिः॥ नियमा इति॥ अवश्यकर्तव्यतया नियमत्वमेषां॥ आसनपंचकमेतदुक्तं वशिष्ठसंहितायां॥ आ
सनेन रुजो हंति प्राणायामेन पातकं। विकारान्मानसंयोगी प्रत्याहारेण सर्वदा॥ धारणाभिर्मनो धैर्यं ज्ञानादैश्वर्यमुत्तमं॥ समाधेर्मोक्षंप्राप्नोति त्यक्त्वा कर्म
शुभाशुभमिति। व्युत्क्रमादिति श्लक्ष्णभागे हस्तमात्रं व्युत्क्रमः॥ सीमन्या इति। गुदमेढ्रांतरालरेखा सीमनी तस्याः शेषः। तत्संधी घुटिके गुल्फौ उभा
न्याप्सिरथस्तयो रिति कोशः॥ पाणिभ्यां परिबंधयेत्। पूर्ववद्स्वस्तिकवदिति शेषः॥ तदुक्तं प्रयोगसारे॥ सीमन्या आत्मनः पार्श्वे गुल्फौ निक्षिप्य पादयोः स
व्ये दक्षिणगुल्फं तु दक्षिणे दक्षिणेतरं दक्षे सव्यं करं स्वसव्येन्यस्येतरं करं॥ अंगुष्ठेच निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु। विंदति ऊर्वोरिति ऊर्वोः स्वस्योरुमूले
चोमात्यदृढपंकुर्यात्॥ प्रत्यङ्मुखांगुली। स्वसंमुखांगुली॥ प्रत्यङ्मुखांगुलीकरौ। जान्वोरुपरिविन्यस्यादित्यन्वयः॥ एकमिति। अधः कृत्वेति दक्षिणो
रुमूलाधः। स्फिज उपरिमंत्रिणेति। तदुक्तं। कालेन पातस्वीयो हस्तः स्वंजानुमंडलं। यावति मात्रा सा तुल्या स्वयैकस्या समान्ययेति ॥ श्री ॥ ०

वायवीपसांततापांतु॥जानुप्रदक्षिणीकृत्य त्वरितेन विलंबितः॥ अंगुलिस्फोटनं कुर्यात्सा मात्रेति प्रकीर्तिता इति॰ पूरितं धारयेदिति कुंभकः॥ सुषुम्णामध्यगामि-
ति॰ पूर्वेणासंबध्यते रेचयेद्धि हि निष्क्रामयेदिति रेचकः॥ केचन रेचकादिकमाहुः॥ अन्ये कुंभकांतमन्यंते॥ एवं क्रमात्॥ भूयो भूयः पौनःपुन्येन मात्रावृद्धि-
क्रमेण॥ एकद्वित्रिवृद्ध्यादिक्रमेण तस्य व्यत्यासेन उक्तवैपरीत्येन द्वादशषोडशप्राणायामान्समाचरेदित्यन्वयः॥ तदप्युक्तं प्राणायामान्प्रणवसहि-
तान् षोडशवशी प्रभाते सायं च प्रतिदिवसमेवं वितन्वते द्विजो पसंभूणप्रहरणकृतं॥ होमकलितं पुनंत्येते मासादपि हन्तेनान्यूनैव दहनादिति॥ परमे

नाड्या पिंगलया चैनं रेचयेद्योगवित्तमः॥ प्राणायाममिदं प्राहुर्योगशास्त्रविशारदाः १८ भूयो भूयः क्रमात्तस्य व्यत्यासेन समा-
चरेत्॥ मात्रावृद्धिक्रमेणैव सम्यग्द्वादशषोडश॥ १९॥ प्राणायामो हि द्विविधः सगर्भोऽगर्भ एव च॥ जपध्यानादिभिर्युक्तं सगर्भं
तं विदुर्बुधाः॥ २०॥ तदपेतं विगर्भं च प्राणायामं परे विदुः॥ क्रमादभ्यसतः पुंसो देहे स्वेदोद्गमोऽधमः॥ २१॥ मध्यमः कंपसंयुक्तो
भूमित्यागः परो मतः॥ उत्तमस्य गुणावाप्तिर्यावच्छीलनमिष्यते २२ इंद्रियाणां विचरतां विषयेषु निरर्गलं॥ बलादाहरणं तेभ्यः प्र-
त्याहारोऽभिधीयते॥ २३॥ अंगुष्ठगुल्फजानूरुसीवनीलिंगनाभिषु॥ हृद्ग्रीवाकंठदेशेषु लंबिकायां ततो नसि २४ भ्रूमध्ये मस्त-
के मूर्ध्नि द्वादशांते यथाविधि॥ धारणं प्राणमरुतो धारणेति निगद्यते॥ २५॥ समाहितेन मनसा चैतन्यांतरवर्तिना॥ आत्मन्य-
भीष्टदेवानां ध्यानं ध्यानमिहोच्यते २६॥ समत्वभावना नित्यं जीवात्मपरमात्मनोः॥ समाधिमाहुर्मुनयः प्रोक्तमष्टांगलक्षणं २७

तमाह॥ जपेति॥ परे बुधाः विदुरित्यन्वयः॥ अयं प्राणायामः पूजाविषय इति ज्ञेयं॥ तदुक्तं॥ अयं प्राणायामः॥ सकलदुरितध्वंसनकरो निगर्भः प्रोक्तः
स्याच्छतगुणफलो गर्भकलितः॥ जपध्यानापेतः सतुनियमग्रुदितो गर्भरहितः॥ सगर्भस्तद्युक्तो मुनिपदिपं वृते योगनिरतो इति॥ शीलनमभ्यासः प्रा-
णायामस्येति शेषः॥ इंद्रियाणामित्यादिना मनस एक एव स्थितिः॥ कायेत्युक्तं भवति॥ यतो मनः सहायानामेव तेषां स्वस्वविषयग्रहणशक्तिः॥

लंविका॥ तालुमूलं मस्तकं ललाटकेशसंधिः। मूर्द्धीतितदुपरितालुः। द्वादशांते ब्रह्मरंध्रे॥ यथाविधीति। गुरुक्रमेणाभीष्टदेवतानामिति। सगर्भं ध्यान
मुक्तं॥ विगर्भमपि ध्यानमुक्तं। तंत्रांतरे। एतत्त्वे निश्चलं चित्तं तद्ध्यानं परमुच्यते॥ द्विधा भवति तद्ध्यानं सगुणं निर्गुणं तथेति॥ योगसिद्ध्यर्थं शरीरांतरे मूला
धारमारभ्य तन्नाडीस्थाने वायुसंचारं वक्तुं शरीरप्रसरणप्रमाणमाह षडिति॥ उभयात्मकं शिवशक्त्यात्मकम्॥ अग्नीषोमात्मकं॥ शुक्रशोणितात्मकं वा॥
तत्प्रथमपटलोक्तानुवादः॥ तस्मादित्युत्सेधात्॥ वंशं पृष्ठवंशं। आश्रिता अंतर्गता यदा इडा सुषुम्णाधारदंडाधारदंडांतरविवरगता शिफाभ्याम् मूलाभ्यां आधा

षण्णवत्यंगुलायामं शरीरमुभयात्मकं॥ गुदध्वजांतरे कंदमुत्सेधाद्व्यंगुलं विदुः॥ २७॥ तस्य द्विगुणविस्तारं वृत्तरूपेण शोभि
तम्। नाड्यस्तत्र समुद्भूता मुख्यास्तिस्रः प्रकीर्तिताः। २८। इडा वामे स्थिता नाडी पिंगला दक्षिणे मता॥ तयोर्मध्यगता नाडी सुषु
म्णा वंशमाश्रिता २९ पादांगुष्ठद्वयं पाताशिफाभ्यां शिरसा पुनः। ब्रह्मस्थानं समापन्ना सोमसूर्याग्निरूपिणी ३० तस्या मध्यग
ता नाडी चित्राख्या योगिवल्लभा॥ ब्रह्मरंध्रं विदुस्तस्याः पद्मसूत्रनिभं परं ३१ आधाराख्यं विदुस्तत्र मतभेदादनेकधा॥ दिव्यमार्ग
मिदं प्राहुरमृतानंदकारणं ३२ इडायां संचरेच्चंद्रः पिंगलायां दिवाकरः॥ ज्ञातो योगनिदानज्ञैः सुषुम्णायां तु ताउभौ ३३ आधार
कंदमध्यस्थं त्रिकोणमतिसुंदरं॥ ज्योतिषां निलयं दिव्यं प्राहुरागमवेदिनः ३४ तत्र विद्युल्लताकारा कुंडली परदेवता॥ परिस्फु
रति सर्वात्मा सुप्ताहिसदृशाकृतिः ३५ विभर्ति कुंडली शक्तिरात्मानं हंसमाश्रिता। हंसः प्राणाश्रयो नित्यं प्राणनाडीपथाश्रया ३६

गानिति केचन द्वादश॥ अन्ये षोडशास्त्वन्ये परे ब्रह्मनन्त्वपराहुः। ततस्तु ब्रह्मकाले च ध्यायेच्चक्रक्रमं सुधीः आधारचक्रं प्रथमं कुलदीपमनंतरं वज्रं चक्रं ततः
प्रोक्तं स्वाधिष्ठानात्मकं परं॥ रौद्रं करालचक्रं च गह्वरात्मकमेव च॥ विद्याप्रदं च त्रिमुखं विपदं कालदंडकं। उक्तास्वनंतं च ततः कालोद्धारकं रकं॥ दीपव
त्क्षोभकं वज्रकानंदकलिकात्मकं॥ मणिपूरकसंज्ञं च लाकुंतं कालभेदनं॥ महोत्साहं च परममदकं पदमुच्यत इति। कुंडलीस्थानमाह। आधारेति।
कुंडलीशक्तिरात्मानं परमात्मानं विभर्ति तच्चोभभागिनीत्यर्थः॥ किंतु जीवात्मानं आश्रित्य जीवाधिष्ठानमंतीत्यर्थः। हंसः प्राणः प्रायः प्राणा वायुसमाश्रया

अतएव प्राण इति॥ प्राणशब्दच्युतिर्दर्शिता॥ द्वादशांगुलमानेनेति॥ वामदक्षिणयोः प्रतिज्ञेयम्। एतत्फलमुक्तम्। तंत्रान्तरे भोजनं मैथुनं युद्धं पुष्यं फलम् हारिकं॥ कुर्यात्क्रूराणि कर्माणि वायौ दक्षिणमास्थिते। यात्राविवाहकर्माणि यानि चतानि सर्वाणि कुर्वीत॥ वामे वायौ तु संस्थिते इति। योगप्रकारमाह। रम्ये एकांत इत्यर्थः। अन्यथा चित्तयक्षे। काठिन्ये सति देहपीड्यातेनैव मानो न योगमिष्यतीति मृद्वासन इत्यर्थः॥ भूतपरिज्ञानार्थमाह। दंडाकारेति॥ दृढं बध्वेति। अन्यथा यदि द्वितीयमार्गेण हृज्जद्दयन्नं गच्छेत्तदुपप्लवः स्यात्॥ करणानिन्द्रियाणि॥ उभे इति। निघ्नन्वेति। पनोनिर्विजेमेघसमद्रवखमोय

आधारादुद्गतो वायुर्यथावत्सर्वदेहिनां। देहं व्याप्य स्वनाडीभिः प्रयाणं कुरुते बहिः॥ ३७॥ द्वादशांगुलमानेन तस्मात्प्राण इतीरितः। रम्ये मृद्वासने शुद्धे पटाजिनकुशोत्तरे ३८ बध्वैकमासनं योगी योगमार्गपरो भवेत्। ज्ञात्वा भूतोदयं देहे विधिवत्प्राणवायुना ३९ तत्तद्भूतं जयेद्देहं दृढत्वां प्रापयेत्सुधीः। दंडाकारा गतिर्भूमेः पुटयोरुभयोरधः ४० तोयस्य पावकस्योर्ध्वं गतिस्तिर्यङ्नभस्वतः। गतिर्व्योम्नो भवेन्मध्ये भूतानामुदयः स्मृतः ४१ धरण्युदये कुर्यात्स्तंभनं वश्यमात्मवित्॥ शांतिकं पौष्टिकं कर्म तोयस्य समये वसोः ४२ मारणादीनि मरुतो विपक्षोच्चाटनादिकं॥ क्ष्वेडादिनाशनं शस्तमुदये च विहायसः ४३ अंगुलीभिर्दृढं बध्वा करणानि समाहितः॥ अंगुष्ठाभ्यामुभे श्रोत्रे तर्जनीभ्यां विलोचने॥ ४४॥ नासारंध्रे मध्यमाभ्यामन्याभिर्वदनं दृढं। बध्वात्मप्राणमनसामेकत्वं समनुस्मरन्॥ ४५॥ धारयेन्मारुतं सम्यग्योगोयं योगिवल्लभः। नादः संजायते तस्य क्रमादभ्यस्य तः शनैः॥ ४६॥

१ स्येति मध्यपदलोपी समासः हंसलक्षणं॥ शिवशक्त्यात्मकं। जीवात्मकं वा। प्रणवोत्पत्तिमाह। पुंप्रकृत्येति। क्रमादिति। बिंदोर्विसर्गांतः सः पुंप्रकृत्यात्मकादितिनामकात्यनिकं॥ तत्वतो बिंदुर्विसर्गमेवाहंपमानिति। अतएवान्तआदौ अकारे विपाते योजिते अहमिति लोकप्रसिद्धः आत्मा इति नयः॥ रूपतिष्ठंति। आराधयंति। स्वरूपं साश्रयं मत्वा नित्यं तमेवास्थिता प्रकृतिरिति संबंधः॥ यद्वा तु प्रकृतेर्नित्यमात्मनः इतिपासद्दा

समानाधिकरणोपक्षौ प्रकृतिरविद्या सा ब्रह्म इति तत्त्वेन जीवकल्पकत्वात् इति नाश्रयं मदाश्रयं मत्वा इयं यदा तद्भावमाप्नोतीति इति संबंधः॥ तद्भावमिति
प्रकृतिपुरुषयोरभेदात् परमात्मैवाहमिति जीवब्रह्मणोरैक्यमिति वाक्यार्थः॥ अतयोभ्यासत्वेवमैक्यमुदेतीति व्यक्तीकृतं॥ लोपयित्वेति व्यंजनयोः कल्पि
तावादेवलोपः। पूर्वरूपं एङः पदांतादिति॥ परानंदमयेति॥ आनंदं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितमिति श्रुतेः॥ नित्यं वक्ष्यमाणन्तु तेश्च चैतन्यं ज्ञानंत
वा सावै कोशगाश्वतदात्मकं॥ सत्यं ज्ञानमनंतं ब्रह्मेति श्रुतेः॥ संसारीत्यतिकल्पकत्वात् कल्पितसत्वरजस्तमोगुणरूपं॥ आत्मावेदस्थितं सोहं शब्दो

मत्तभृंगांगनागीतसदृशः प्रथमोध्वनिः। वंशिकास्याविलापूर्णवंशध्वनिनिभोपरः ४७ घंटारवः समः पश्चाद् घनमेघसमोप
रः॥ एवमभ्यसतः पुंसः संसारध्वांतनाशनं॥ ४८॥ ज्ञानमुत्पद्यते पूर्वं हंसलक्षणमव्ययं॥ पुंप्रकृत्यात्मकौ प्रोक्तौ बिंदुसर्गौ मनी
षिभिः॥४९॥ ताभ्यां क्रमात्समुद्भूतौ बिंदुसर्गावसानकौ॥ हंसोतौ पुंप्रकृत्याख्यौ हं पुमान् प्रकृतिस्तु सः॥५०॥ अजपाकथिता ताभ्यां
जीवो यमुपतिष्ठते॥ पुरुषं स्वाश्रयं मत्वा प्रकृतिं नित्यमात्मनः॥५१॥ यदा तद्भावमाप्नोति तदा सोहमयं भवेत्॥ सकारार्णहकार
र्णं ——— लोपयित्वा ततः परं॥५२॥ संधिं कुर्यात्पूर्वरूपस्तदासौ प्रणवो भवेत्॥ परानंदमयं नित्यं चैतन्यैकगुणात्मकं ५३ आ
त्माभेदस्थितं योगी प्रणवं भावयेत्सदा॥ आम्नायवाचामतिदूरमाद्यं वेद्यं स्वसंवेद्यगुणेन संतः। आत्मानमानंदरसैकसिं
धुं पश्यंति तारात्मकमात्मनिष्ठाः ५५ सत्यं हेतुविवर्जितं श्रुतिगिरामाद्यं जगत्कारणं। व्याप्तस्थावरजंगमं निरुपमं चैतन्यमंतर्गतं

च्छुतयातस्य पातस्य तदर्थकत्वात्। आम्नायेति। यतो वाचो निवर्तंत इति श्रुतेः। आद्यं शाश्वतं नित्यत्वात्। स्वसंवेद्यगुणेन वेद्यं स्वप्रकाशमित्यर्थः॥
आनंदमिति॥ आनंदं ब्रह्मणो रूपमिति श्रुतेः॥ तारात्मकमुक्तरीत्या आत्मनिष्ठा। आनंदनैरंतर्यदीर्घकालाभ्यासेन संचितपरा योगिनः॥ सत्यं ज्ञानमि
तिश्रुतेः हेतुविवर्जितं नित्यत्वादनुत्पाद्यं॥ श्रुतिगिरामाद्यं॥ श्रुतिगिरामाद्यं वेदानामुद्धारकर्तृत्वात्सवेदकर्तृत्वाद्वा॥ जगत्कारणं आनंदाद्येव खल्विमा
नि भूतानि जायन्ते इति श्रुतेः॥ व्याप्येति। तद्विकल्पत्वाज्जगतः। निरुपममद्वितीयत्वेन चैतन्यं आत्मस्वरूपमसंकेतव्यमित्यर्थः ॥ ० ॥ ॥

रविचंद्रवह्निवपुरिव वपुर्यस्य प्रकाशरूपमित्यर्थः। तारस्येति अकारोकारमकारशक्तिशांतारेच्चैर्निरूप्यमानं तदेवाह। मानेतिगम्यमिति। श्रुतिभक्तिरू
पवितात्तपागम्यं विचारणीयं॥ अच्युतं उद्विक्षपरहितं॥ सगुणब्रह्मोपासनामाह॥ हिरण्मयमिति॥ त्रिमूर्तिमूलमित्यनेनास्यन्यस्तनीयानिधामानिसूचि
तानि॥ अन्यांसकृयोपास्तिमाह। ध्यायता आपादेदां तनाधितत्स्वच्छरणं यस्या अन्यत्साकारध्यानमाह॥ पिंडमिति॥ अकारोकारमकारात्मकलात्मकत्व

आत्मानं रविवह्निचन्द्रवपुषं तारात्मकं संततं नित्यानन्दगुणालयं सुकृतिनः पश्यंति हृद्धेन्द्रियाः॥ ५७॥ तारस्य सप्तविभ
वैः परिचीयमानमानैरगम्यमनिशं श्रुतिमौलिमृग्यं॥ संवित्समस्तगमनश्वरमच्युतं ततेजः परं भजत सांद्रसुधांबुराशिं
हिरण्मयं दीपमनेकवर्णं त्रिमूर्तिमूलं निगमादिबीजं॥ अंगुष्ठमात्रं पुरुषं भजंते चैतन्यमात्रं रविमंडलस्थं॥ ५८॥ सुखदादा
नसुभगा शंकरार्द्धशरीरिणी॥ गंधपुष्पोपहारेस्तप्रीतानः पार्वती सदा॥ ६०॥ ध्यायंति दुग्धाब्धिभुजंगभोगे शयानमाद्यं क
मलासहायं॥ प्रफुल्लनेत्रांबुजमंजनाभं चतुर्मुखेनाश्रितनाभिपद्मं॥ ६१॥ आम्नायगं द्विवरसांघननीलमुद्यच्छ्रीवत्सकौस्तुभ
गदांबुजशंखचक्रं॥ हृत्पुंडरीकनिलयं जगदेकमूलमालोकयंति कृतिनः पुरुषं पुराणं॥ ६२ बिंदोर्नादसमुद्भवः समुदिते
नादे जगत्कारणाम्। तारं तत्वमुखांबुजं परिस्थितं वर्णात्मके भूजजैः। आम्नायां घ्रिचतुष्टयं पुररिपोरानंदमूलं वपुः। पायाद्दो
मुक्तेंदुखंडविगलद्दिव्यामृतौघस्रुतं ६४ पिंडं भवेत्कुंडलिनी शिवात्मा पदं तु हंसः सकलांतरात्मा॥ रूपं भवेद्बिंदुरमंदकां
तिरतीतरूपं शिवसामरस्यम्। ६॥ त। पिंडं प्रणवः। कुंडलीतद्रूपा सैव शिवात्मसकलांतरात्मा हंसः। तस्याः पदे स्थानं। अनयो रवींदुकां

तिर्बिंदुरूपं परमार्थतस्त॥ शिवयोः सामरस्यं प्रतीतरूपं॥ अतीतरूपमेव पद्मा हेत्वकः। यूयं सर्वजगतीकाम्येच्छा तास्छिवसामरस्यरूपं अतीतपती
तपीतंगच्छतेत्यर्थः॥ कुतः अनेन सायुज्यमुक्तिर्भवतीत्यर्थः॥ पिंडादिति। सारूप्यमुक्तिर्भवतीत्याह॥ पिंडादिति। सारूप्यमुक्तिमाह॥

॥शिवेलयमिति॥ कुंडलिनीचिंतनरूपयोगमाह॥ मूलेति॥ मूलाधारात्मूलाधारात्तत्र निद्राजाग्रद्रूपा। कुंडलिन्याः सर्पाकारत्वात्भुजंगमहिषीत्युपदेशः॥ आशु
यांती आधारसमूहं स्वाधिष्ठानादिरूपं त्यंभोजसहस्रारे परमशिवमौलिस्थेंदुमंडलात्पतिता॥ स्वगृहं मूलाधारं तं जीवेन जप्यमानं हंसस्तेन गृहीत्वेति संबंधः स्वाश्र
यं मूलाधारे। अव्यक्तं परविंदुनान्वेतित्यवनो विशेषः स्वपुरं मूलाधारं। समीरणाद्द्वयेति। अपाननिरोधात्प्राणवायुनिरोधाच्च कुंडलिगतयोर्मिथः संघट्टः॥ अत्र

पिंडादियोगं शिवसामरस्यात्सबीजयोगं प्रवदंति संतः॥ शिवेलयं नित्यगुणाभियुक्ते निर्बीजयोगं फलनिर्व्यपेक्षं॥६६॥ मूलो
न्निद्रभुजंगराजसदृशीं यांती सुषुम्णांतरं। भित्वाधारसमूहमाशु विलसत्सौदामिनीसन्निभा॥ व्योमांभोजगतेंदुमंडलगलद्दि
व्यामृतौघप्लुतां संभाव्य स्वगृहं गतां पुनरिमां संचिंतयेत्कुंडलीं॥६७॥ हंसं नित्यमनंतमव्ययगुणं स्वाधारतो निर्गता शक्तिः कुंडलि
नी समस्तजननी हस्ते गृहीत्वा च तं॥ याता शंभुनिकेतनं परसुखं तेनानुभूय स्वयं याती स्वाश्रयमर्ककोटिरुचिरा ध्येया जगन्मोहि
नी॥ ६८॥ अव्यक्तं परविंदुमंचितरुचिं नीत्वा शिवस्यालयं शक्तिः कुंडलिनी गुणत्रयवपुर्विद्युल्लतासन्निभा॥ आनंदामृत
तमध्यगं पुरभिदं चंद्रार्ककोटिप्रभं संवीक्ष्य स्वपुरं गता भगवती ध्येयानवद्यागुणैः॥६९॥ मध्ये वर्त्मसमीरणाद्द्वयमिथः
संघट्टसंक्षोभजं शब्दस्तोममतीत्य तेजसि तडित्कोटिप्रभाभासुरे॥ उद्यंतीं समुपास्महे नवजपासिंदूरसंध्यारुणां सांद्रानंद
सुधामयीं परशिवं प्राप्तां परां देवतां ७०॥ गमनागमनेषु जांघिकी सा तनुयाद्योगफलानि कुंडली॥ मुदिता कुलकामधेनुरेषा
भजतां कांक्षितकल्पवल्लरी॥७१॥९९ शब्दस्वरूपहृदिक्रमणमेव विशेषः॥ जंघिकी समर्थेत्यर्थः॥ शक्तिस्त्रिकोणं तस्यामध्यस्थानीयविंदुतः
निलयं अथवा मूलाधारस्य त्रिकोणस्य शक्तिबीजविंदुनिलयं॥ कोदंडभ्रूमध्यं आज्ञाचक्रं मत्स्यना तत्सदृशा। अत्र हृदयं देवपतिं प्रतिगमनं वर्णमध्यात्तो
चास्य विशेषः॥ सादाख्ये सदाशिवाख्यं नादाख्यमिति सा॥ एतच्च प्रतिचक्रं भिन्ना कुंडलात्सत्यरतिमते॥ भावात्यं चेनयोगः॥ वर्णोत्पादकत्वं च विशेषः॥

तदुक्तं स्वयंभूलिंगनिजयोनिमध्ये रंध्रांतरं ह्रत्सरसीरुहांतः कृपाकृपंचेजरमंतराले व तिसंतो गगनांतरे इति ॥ मूलस्तः परस्वासनादार्द्धोपकुंडलिनी ध्या
नविशेषान्वदंति । महा निजभवने त्यादिना ॥ आपानवायुसंकोचादाधारवंधः । एवं ॥ पानवायुनिरोधोपि प्रमुखशब्दवाच्यः ॥ अनेव समतनमाधनंतप्रधानंत
त्स्णदीर्घत्वं तत्संकोचेनदीर्घोकंच निनसमरुतां ॥ विनम्रदेवानां कोटीरांश्रैः ॥ मुकुटाग्भागैः ॥ अंतर्मार्गैः ॥ अंतर्मात्रकाक्रमेण कुंडलिनीध्यानमाह वर्णैरिति ॥

आधारास्थितशक्तिविंदुनिलयां नीवारशूकोपमां नित्यानंदमयीं गलत्तरसुधावर्षैः प्रवोधप्रदैः । सित्काषट्सरसीरुहाणि वि
भिवत्को दंडमध्योदितां ध्यायेज्ज्ञास्वरवंधुजीवरुचिरां संचिन्मयीं देवतां ॥ ७२ ॥ हृत्पंकेरुहभानुविंवनिलयां विद्युल्लतामत्स
रोवाला कारुणतेजसा भगवतीं निर्भर्त्सयंतीं तमः ॥ नादाख्ये परमईश्वरकुटिलं संचिन्मयीं शाश्वतीं पांती मस्स रूपिणीं वि
मलधीर्ध्यायेद्धिभुं तेजसां ७३ भालेपूर्णनिशापतिप्रतिजदान्नी हारहारत्विषां सिंचंतीममृतेन देवममितेनानंदयंतीं तनुं ॥ व
र्णानां जननीं तदीयवपुषा संप्राप्य विश्वं स्थितां ध्यायेत्सम्यगनाकुलेन मनसा संचिन्मयीमंविकां ॥ ७४ ॥ मूले भाले हृदि च विलस
द्वर्णरूपा सवित्री पीनोत्तुंगस्तनभरविनमन्मध्यदेशा महेशी ॥ चक्रे चक्रे गलितसुधया सिक्तगात्राप्रकामं दद्याद्द्यां श्रियम
विकलां वाङ्मयी देवता वः ७५ निजभवननिवासादुच्चरंती विलासैः पथि पथि कमलानां चारुहासं विधाय तरुणतरणिको
तिः कुंडली देवता सा शिवसदनसुधाभिर्दीपयेदात्मतेजः ७६ आधारवंधप्रमुखक्रियाभिः समुत्थिता कुंडलिनी सुधाभिः ।
त्रिधामवीनं शिवमर्चयंती शिवांगना वः शिवमातनोतु ॥ ७७ ॥ ॥ दिशो दश कलाः । चक्षुरसाविति ॥ अक्रमेणोदर्शितत्वाद्येरितामलाधा
रस्थितत्वेनाद्यंतावद्दासाद्यैः सकारादिभिककारांतैः ॥ आद्यैः १६स्वरैः ह्यत्वस्युयेते रिति ॥ योजना ॥ राकिनी लाकिनी डाकिनी शाकिनी हाकिनी काकिनीभिः ॥



ब्रह्मादिभिर्देवताभिः परिविनान् ॥ भिदानेति शेषसंवंधः ॥ आधारेति ॥ त्रिकोणकर्णिकाकं चतुरम् ॥ चतुर्दलमाधारमतस्याद्वर्णचतुष्टं सत्वादिरूपदिशीतिदेश

कारणत्रयमेवादात्स्व निमित्तकारणांतर्गत एवेति॥ कारणत्रयमेवादात्स्व

काश्यादिपदात्तत्स्वरूपस्थात्तत्र स्थितेकारणपंचकस्य उपादानसमवायिनिमित्तप्रयोजकसहकारिकारणे निमित्तकारणांतर्गत एवेति॥ पंचभूतानां पंचतन्मात्रारूपाणि कारणानि तद्रु

रूपतश्च॥ नचांतर्गतेएवेतिकारणत्रयमेवाहुः॥ तथापोपवृंहेदमाश्रित्यकारणपंचकोपन्यासः। यद्वा। पंचभूतानां पंचतन्मात्रारूपाणि कारणानि तद्रु

आपीनतुंगकुचनम्रमतंगतं त्रिशंभोः कलत्रममितां श्रियमा

सिंदूरपुंजनिभमिंदुकलावतंसमानंदपूर्णनयनत्रयशोभिवक्त्रां॥ तरुणाशकलं वांद्रं विभ्रद्वृद्ध

तनोतु ७८ ॥ नयनकमलैर्दीर्घादीर्घैरलंकृतदिङ्मुखं विनतमरुतां कोटीराग्रैर्निघृष्टपदांबुजं॥ तरुणशकलं चांद्रं विभ्रद्

स्तनमंडलंस्फुरतु हृदये वं धूकाभं कलत्रमुमापतेः॥ ७९॥ वर्णैरर्णावषट्दिशारविकलाचक्षुर्विभक्तैःक्रमादाद्यैः शादिभि

रावृतान्स्वहयुतैः षट्चक्रमध्यानिमान्॥ डाकिन्यादिभिराश्रितान्परिचितान्ब्रह्मादिभिर्देवतैर्भिंदानाय र्देवता त्रिजगतां

चित्ते विधत्तां मुदः॥ ८०॥ आधारांबुजचक्रशोभिततनुर्निर्गत्य शीसत्वरं भिंदंती कमलानि चिन्मयघनानंदप्रबोधोद्धुरां॥ संक्षुब्ध

ध्रुवमंडलामृतकरप्रस्यंदमानामृतस्रोतःकंदलितामंदतडिदाकारां शिवां भावयेत्॥ ८१॥ आनंदमौलिमनिशं श्रुति

मौलिमृग्यमर्द्धेंदुभूषणमधिष्ठितसर्वलोकं॥ भक्तार्तिभंजनपरं पदमीश्वरस्य रत्याब्जभानिनियतं वपुरंबिकायाः। ८२।

मंजुसिंजितमंजीरं वाममर्द्धं महेशितुः॥ आश्रयामि जगन्मूलं यन्मूलं वचसामपि॥ ८३॥ स्थूलेन्द्रनीलरुचिरं कुचभारनम्रं

भास्वत्सुभूषणगणैः प्रविभक्तशोभं॥ विश्वैकमूलमनिशं श्रुतिमौलिमृग्यमर्द्धं महेशितुरखंडितमाश्रयामि॥ ८४ ॥ ॥

कृत्वा योजपेत्परमं पदमिति। अत एव शून्ये रूपे निरालंबने। आधारहीने॥

कमामहाकपिलराजे। मात्राः पंचपरित्यज्य ततः कारणपंचके। दिव्यं वकारणं कृत्वा योजपेत्परमंपदमिति। अत एव शून्येऽरूपे निरालंबने। आधारहीने॥

त्मानंजीवात्मानं निश्चलधियानिवेश्य योगफलं प्रयाति॥ ग्रंथकर्ता स्ववंशपरंपरास्तानाख्याति ॥ ० ॥ ० ॥ ॥

शा·ति· महावलायेत्यादिना॥तत्वसंख्यैः पंचविंशतिसंख्यैः अत्राद्यःपटलःसृष्टिप्रतिपादकत्वेनमूलप्रकृतिप्रतिपादनपरः॥मध्येत्रयोविंशतिपटलाः॥प्रकृतिप्र
टी·पू· तिपादनपराः॥अंत्यपटलःप्रकृतिव्यतिरिक्तपुरुषप्रतिपादनपरः॥एवंपंचविंशतितत्वात्मकत्वमस्यग्रंथस्योक्तंभवति॥परदेवतैवमध्युयेतिकर्मसक
१२४

दिक्कालादिविवर्जितेपरशिवेचैतन्यमात्रात्मिकेशून्येकारणपंचकस्यविलयंनीतेनिरालंबने॥आत्मानंविनिवेश्यनिश्चल
धियानिर्लीनसर्वेन्द्रियोयोगीयोगफलंप्रयातिसुलभंनित्योदितंनिष्क्रियं॥८५॥महावलापप्रशान्तोस्मितसंस्मेसंविद्धतालिंग
नशीतलाय॥पेनार्पितंमुक्तिफलंविपक्वमाम्नायशाखाभिरुपाश्रितेभ्यः॥८६॥तस्मादभूदखिलदेशिकवारसेन्द्रःपद्मक
मेसागरविहारविनोदशीलः॥यस्यत्रिलोकविततंविजयाभिधानमाचार्यपंडितइतिप्रथयंतिसंतः॥८७॥ तन्नंदनोदेशि
कदेशिकोभूच्छीकृष्णइत्यभ्युदितप्रभावः॥पत्यादकारुण्यसुधाभिषेकाल्लक्ष्मींपरामश्नुवतेकृतार्थाः॥८८॥आचार्यवि
द्याविभवस्यतस्यजातःप्रभोर्लक्ष्मणदेशिकेन्द्रः॥विद्यास्वशेषासुकलासुसर्वास्वपिप्रथांयोमहतींप्रपेदे ८९ आराधयसा
रमखिलंनिखिलागमेभ्यःश्रीशारदातिलकनामचकारतंत्रं॥प्रात्तःसएवपटलैरिहतत्वसंख्यैःप्रीतिप्रदानविधयेविदुषां
चिराय ९० अनाद्यंतानतशंभोर्वपुषिकलिताईनवपुषाजगद्रूपंशश्वत्सृजतिमहनीयामपिगिरं॥सदर्थोशब्दार्थस्तनभर
नताशंकरवधूर्भवद्भूत्यैभूयाद्भवजनितदुःखौघशमनी॥९१॥इतिश्रीशारदातिलकेपंचविंशःपटलः॥२५॥ समाप्तः॥

लतंत्रार्थमुपसंहरन्नाशिषांगंमंगलंकरोति॥अनाद्यंतेति॥इतिश्रीमहामहोपाध्यायपीरामसंप्रदायप्रवर्तकश्रीमन्माधवभट्टविरचितायांशारदाटीकायां एम·
गूढार्थदीपिकायांपंचविंशःपटलः २५ समाप्तोयंग्रंथः॥ सम्वत् १९४१ शाके १८०६ मीतीमार्गशीर्षशुक्ल २ वारबुधवार॥ भगवत्येतमः १२४

# शारदा

॥श्री काशी विश्वनाथपुरी मे महल्ला भदयइनी दिवाकर छापाखाने मे शारदा तिलक गूढार्थदीपि
का सहित छापा गया शिवचरन के रहो लिखा महीपनारायण पांडे छापनेवाले मातादयाल शोधा पंडि
त वटुकनाथ जिसे लेना होय उसे चाननी चौक मे कुंजगली के पास शिवचरन के दुकान पर मिलेगा ॥
सम्वत १९४१ मीती पोष वदी ७ वार मंगल